॥ श्रीजिनायनमः ॥

# ॥ श्रीमृगावतीचरित्रं ॥

( कर्त्ता मलधारिश्री देवप्रभसूरिः )

छपावी प्रसिद्ध करनार.

पंडित श्रावक हीरालाल हंसराज.

( जामनगरवाला. )

संवत्—१९६६.   सने १९०९

किं—रु.—७—१२—०

☞ जामनगर जैनभास्करोदय छापखानामां छाप्युं.

॥ श्रीजिनाय नमः ॥

# । अथ श्रीमृगावतीचरित्रं प्रारभ्यते ॥

( कर्त्ता श्रीमलधारिदेवसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाला )

जयति वर्द्धमानस्य । जितदंभोलिविभ्रमाः ॥ मोहांधतमसध्वंस–हेलयः सत्त्वकेलयः ॥
॥ १ ॥ सारसारस्वतामोद–मेदस्कररसायनं ॥ गुरूणामुपदेशस्य । महेम महिमाद्भुतं ॥२॥
लब्धेऽस्मिन् पुण्यनैपुण्या–न्मानुषत्वेऽपि दुर्लभे ॥ धर्मकर्माणि निर्मातुं । यतितव्य सचेत-
सा ॥ ३ ॥ परोपकाररूपश्च । धर्मः सर्वत्र सम्मतः ॥ कृताद्धितोपदेशाच्च । नोपकारः परः
पुनः ॥४॥ तेनोर्जितरजःपुंज–मार्जन सद्गुणार्जनं ॥ मृगावत्यादिदृष्टांतै–स्तदेतदुपदिश्यते ॥
॥ ५ ॥ उद्दामविनयस्थूल–मूलो गुणगणद्रुमः ॥ मृगावत्या इव श्रेयः–श्रीसंबंधनिबंधनं ॥
॥ ६ ॥ श्रीवत्स इव वत्साख्यो । देशः ख्यातोऽस्ति भारते ॥ अच्युतश्रीपरीभोग–सुभगो

प्रावृकस्थितिः ॥ ७ ॥ ग्रामाः कुर्कुटसंपात्या—पक्वशालेयशालिनः ॥ गोपीगीतकलध्वानै—
रध्वन्यान् यत्र रुंधतः ॥ ८ ॥ तत्र श्रीवेश्मकौशांबी—त्यस्ति राजन्वती पुरी ॥ इन्नाश्च य-
स्यामिन्याश्च । दधते दानसौरज्नं ॥ ९ ॥ यस्यां वास्तव्यलोकस्य । जन्मापूर्वमिदं द्वयं ॥ प-
रचक्रोद्भवा न्नीतिः । प्रार्थना च परंप्रति ॥ १० ॥ पराजितपरानीकः । शतानीकोऽवनीपतिः
॥ तां पुरीं पालयामास । स्वःपुरीमिव वासवः ॥ ११ ॥ येनारिनारीनेत्राणा—मश्रु दत्वा प्र-
सृत्वरं ॥ अंजनं कृत्स्नमादाय । विदधे धवलं यशः ॥ १२ ॥ अनून्मृगावती तस्य । पत्नी प्री-
तिलतावनिः ॥ यदीयरूपकाव्यस्य । समस्याः स्वर्गयोषितः ॥ १३ ॥ अवरोधवधूवीरुत्—सा-
र्थे बहुविधेऽपि च ॥ सल्लकी सिंधुरस्येव । तस्य सैवातिवल्लन्ना ॥ १४ ॥ धुरं युगंधरेऽमात्ये
। राज्यस्यारोप्य न्नूपतिः ॥ मृगावत्या समं कामं । काममेवाऽकृतार्थयत् ॥ १५ ॥ रहः स्म-
ररहस्येषु । मिथःप्राप्तोपदेशयोः ॥ पर्यायेण तयोरासी—द्गुरुशिष्यविधिक्रमः ॥ १६ ॥ छेको-
क्तिन्निस्तथा कांतो । दूरमाराधितस्तया ॥ ददौ सर्वाधिकारित्वं । यथास्याः स्मरकेलिषु ॥

॥१८॥ इत्थं विषयसर्वस्व—स्वादमानंदचेतसः ॥ अजायत मृगावत्या । गर्भोऽप्यद्भुतभाग्यतः ॥
॥ १९ ॥ इंदुगर्भेव दिक् पूर्वा । सूतिगर्भेव केतकी ॥ आपन्नसत्त्वा सा राज्ञी । किंचिदुच्छ्व-
सिता बभौ ॥ २० ॥ वितीर्णवर्णसौभाग्यः । पाडुभावः कपोलयोः ॥ तस्या गर्भप्रबंधस्य ।
विदधे विवृतिं तदा ॥ २१ ॥ कदाचिदुल्लसत्प्रीति—रंतःपुरमुपेयिवान् ॥ खेदसादितसर्वांगी—
मीक्षांचक्रे नृपः प्रिया ॥ २२ ॥ सविकल्पमनल्पं त्वं । प्रिये किमिति खिद्यसे ॥ कोनाम
कुपितस्तस्य । यः स्यात्खेदयिता तव ॥ २३ ॥ राज्ञी व्यज्ञपयेदेव । नान्यत्खेदस्य कारणं ॥
अत्यंतदुर्लभाः किंतु । दोहदो मेऽपराध्यति ॥ २४ ॥ सद्यो निवेद्यतां किंतु । दुःपूरः कोऽपि
दोहदः ॥ इति निर्बंधतापृष्टा । व्याचष्टेस्म मृगावती ॥ २५ ॥ आपूर्णाया जपावर्णै—राकर्णं
रुधिरांबुभिः ॥ कुर्वे वाप्या यदि स्नानं । तदा स्यां पूर्णदोहदा ॥ २६ ॥ प्रतापं चानुरागं च ।
गर्भेऽस्मिन् सूचयत्यय ॥ दोहदस्तव देवीति । राजा राज्यै न्यवेदयत् ॥ २७ ॥ ततश्चादिक्-
दाक्षेपा—दमात्य मंत्रिपुंगवं ॥ दुःकरो दोहदार्थश्च । देवी च परिताम्यति ॥ २८ ॥ चिंतयोपा-
यक कंचि—न्नैषा दुःखायते यथा ॥ इति मंत्री धरित्रीश—निर्देशं प्रत्यपद्यत ॥ २९ ॥ वापीं

॥ ३० ॥ नृ-<br>
विधाय कौसुंन्न–रसरंगतरंगितां ॥ ततोऽमात्यो मृगावत्यै । कथयामास सादरः<br>
॥ ३१ ॥ दुर्वायवांकुरोत्तंसा । मौक्तिकप्रायन्नूषणा ॥ नद्रासितसितछत्रा । प्राप वापीं मृगा-<br>
वती ॥ ३२ ॥ युग्मं ॥ कृपाणपाणिरेतस्याः । कौशांबीपरमेश्वरः ॥ कक्षीकृत्य स्वयं रक्षा-<br>
मारक्षपदवीं दधौ ॥ ३३ ॥ एतामावृत्य सामंते–राशासु निखिलास्वपि ॥ नानास्त्रपाणिन्नि-<br>
स्तस्थे । दिक्पालैरिव रक्षिन्निः ॥ ३४ ॥ नदीप्रमणिसोपानां । पुष्पप्रकरदंतुरां ॥ रोमांचित-<br>
वपुर्वापी–मवतीर्णा मृगावती ॥ ३५ सा स्वछंदकृतोत्साहा । स्नांती सुचिरमन्वन्नूत् ॥ स-<br>
र्वांगीणसुधासेकात् । सातिरेकं सुखोत्सवं ॥ ३६ ॥<br>
अथासौ तत्र संपूर्ण–रुधिरस्नानदोहदा ॥ यावन्नोद्गितलिसेव । वाप्याः किंचिच्च निर्य-<br>
यौ ॥ ३७ ॥ अकांड इव चंमेन । न्नारंमेण पतत्रिणा ॥ कुतोऽप्यागत्य सालोकि । नव्यामि-<br>
षमनीषया ॥ ३८ ॥ सर्वेषां पश्यतामेव । स पापः पश्यतोहरः ॥ एतां क्रमाभ्यामाक्रम्य ।<br>
दूरमूर्ध्वं खमुद्ययौ ॥ ३९ ॥ अहो गृह्णीत गृह्णीत । वेगेन विहगाधमं ॥ मम जीवितमादाय

। सैव गच्छति गच्छति ॥ ४० ॥ हंहो धावत सामंताः । समंतादपि सोद्यमाः ॥ क्वैव यास्यति
पापीयान् । द्रुत युष्मदनाहतः ॥ ४१ ॥ इति नृपत्तुरादेशा–लुब्धकाल प्रधाविताः ॥ सुप्रतीपे-
न सेनान्या । सम सैन्यास्तमन्वगुः ॥ ४२ ॥ विहंगमाहिसदंश–व्यग्रातरलतारकं ॥ चक्षुः
क्षिपंतीं तां वीक्ष्य । प्रेम्णा पर्यश्रुलोचन. ॥ ४३ ॥ रक्ष रक्षार्यपुत्रेति । श्रुत्वा प्रणयिनीगिरं
॥ व्यापारितनिसीतासि–र्वेगाद्व्योमोत्पतन्निव ॥ ४४ ॥ हत्वा देवीं क रे यासि । धत्त धत्ते-
ति तं रुषा ॥ आक्षिपन् पक्षिणं दुःस्थ–स्तस्थौ नृपतिरुन्मुखः ॥ ४५ ॥ त्रिभिर्विशेषकं ॥
लोचनाऽगोचरत्वं च । गच्छति स्म विहंगमे ॥ अनिद्राऽस्तोकशोकश्च । मूर्छतिस्मेति नृपतिः
॥ ४६ ॥ शीतोपचारैर्मूर्छाया । विच्छेदे विहिते सति ॥ सप्रेमा प्रेयसीं स्मृत्वा । विह्वलो वि-
ललाप सः ॥ ४७ ॥ हे प्रिये पद्मगौरांगि । हा सुकेशि कृशोदरि ॥ हे निम्ननाभे रंभोरु ।
हा मृगाक्षि मृगावति ॥ ४८ ॥ हा देवि क्व प्रयातासि । विनीतासि वरानने ॥ तदेहि देहि
दीनस्य । प्रिये प्रतिवचो मम ॥ ४९ ॥ मम साम्राज्यसर्वस्वं । निस्त्रपेण पतत्रिणा ॥ तेन
त्वां नयता तन्वि । किं न नीतं दुरात्मना ॥ ५० ॥ क्व ते देवि मदीयांक–पर्यंकतलखेलनं

॥ क्व च तस्य विहंगस्य । कठोरचरणग्रहः ॥ ५१ ॥ ममापराधलक्षाणि । प्रेक्षमाणापि नेक्षसि ॥ त्वमिव प्रणयप्रेम्णा । कस्तथा प्रश्रयिष्यति ॥ ५२ ॥ पत्न्या अपि परित्राणे । यस्य नौजस्विनो भुजाः ॥ स कथं दर्शयिष्यामि । जनस्यापि स्वमाननं ॥ ५३ ॥ विलपंतं तमित्यूचे । मंत्री किं परिदेवनैः ॥ स्थिरो भव भुवोऽधीश । माऽवधीरय धीरतां ॥ ५४ ॥ किं विक्रमाभिरामस्य । रामस्य दयितां पुरा ॥ सीतां जहार न स्वामिन् । दुर्द्धरो दशकंधरः ॥ ॥ ५५ ॥ सहायीकृत्य सुग्रीवं । दशग्रीवं निहत्य च ॥ कृतयत्नः पुनः पत्नीं । किमानिन्ये न राघवः ॥ ५६ ॥ तथैव वयमप्येता–मानेष्यामो मृगावतीं ॥ नैवानेष्यति सेनानी । सुप्रतीपोऽधुना यदि ॥ ५७ ॥

इति जल्पत एवास्य । सोऽपि वेगादुपागतः ॥ राज्ञे विज्ञपयामास । स्वरूपं साश्रुलोचनः ॥ ५८ ॥ देव सोऽस्मत्पताकिन्या । नभस्थो भूतलस्थया ॥ अन्वयायि व्रजन्नाशां । दक्षिणां वेगदक्षिणः ॥ ५९ ॥ धनुर्वेदविदो देवीं । रक्षंतो लक्ष्यभेदिनः ॥ कंकपत्रगणं मंक्षु । चिक्षिपुः पक्षिणंप्रति ॥ ६० ॥ युद्धमर्मविदो योधा । नाराचनिचयैस्तदा ॥ हंतुमैच्छन्नतुच्छैस्तं ।

देवीत्राणाय पत्रिणं ॥ ६१ ॥ अन्यस्तपक्षिपापर्द्धि–वर्द्धिष्णुबहुलाधवाः ॥ उपचक्रमिरे बद्धुं ।
पाशैस्तं खगपांशुनं ॥ ६२ ॥ तस्मिन्नुच्चनन्नोन्नाग–रंहस्विनि विहंगमे ॥ अस्माकं विक्रमा-
रंन्ना । वन्नूवुर्निष्फलाः परं ॥ ६३ ॥ यदि नाम श्रयेदेषः । शाखां कस्यापि शाखिनः ॥ इ-
त्यानुपदिकाना नः । सोऽदृश्यत्वमगात्खगः ॥ ६४ ॥ स्त्र्योतती स्वामिनीक्षौमा–द्वीक्ष्य यां
विदुधोरगिं ॥ अव्रजाम प्रतीपेन । सापि दैवेन संहृता ॥६५॥ वैवेयस्य विधेर्वृत्तिं । विलोक्य
प्रातिकूलिकीं ॥ अन्नागवैवैरस्मान्नि–र्व्यावृतं स्वामिनीं विना ॥ ६६ ॥ श्रुत्वेदं शोकमंन्नारो
। न्नूपालो व्यलपत्पुनः ॥ न्नूपः संवोधयांचक्रे । सौधमानीय मंत्रिणा ॥ ६७॥ राजन्नेवं युव-
त्येव । रुद्यते किं पुनः पुनः ॥ महात्मना हि धैर्यं स्या–द्व्यसने निकषोपलः ॥ ६८ ॥ न्य-
क्कारमितरोऽप्येति । शोकावेशविसंस्थुलः ॥ किं पुनर्विस्फुरद्धैर्य–सरंन्नाः पृथिवीभुजः ॥६९॥
वेष्टयामास कौशाम्बीं । यदागत्य निरत्ययां ॥ चंडप्रद्योतन्नूपालः । किमेतदिति विस्मृतं ॥
॥ ७० ॥ येन वीरायते वैर–स्तादृशः सैन्यवारिधिः ॥ तस्य ते निहतालोकं । शोकं कर्त्तुं न
युज्यते ॥ ७१ ॥

इति वैरिकथारंभा—दुज्जागृतपराक्रमः ॥ मनो व्यापारयामास । राज्यचिंतासु नृपतिः
॥७१॥ किंतु तस्मिन् मृगावत्या । जैत्रशस्त्रेण वर्जितः॥ लेभे संभावनाहीनो । न सेवाऽवसरं
स्मरः ॥ ७२ ॥ अपारराज्यव्यापार—पारवश्यदशामपि ॥ जग्मतुस्तस्य वाक्कायौ । मनस्त्व-
नुमृगावतीं ॥ ७३ ॥ प्रत्यारामं प्रतिग्रामं । प्रत्याशं प्रतिपर्वतं ॥ स चरान् प्रेषयामास । मृ-
गावत्याः प्रवृत्तये ॥ ७४ ॥ त्वदधीनं सुखं सुभ्रु । विमुखी मास्म भूर्मयि ॥ इत्यादि तस्य
स्वप्नांतः । श्रुत्वाऽरुद्यत सेवकैः ॥ ७५ ॥ तदेकतानध्यानत्वा—त्सभायामपि तस्थुषः ॥ मृगा-
वतीति तस्याऽभू—ज्जने गात्रविपर्ययः ॥ ७६ ॥ न कश्चित्तस्य चानिन्ये । रामस्य हनुमानिव
॥ पत्नीप्रवृत्तिमित्येत—त्तं धुनोति पदे पदे ॥ ७७ ॥ तस्य मन्वंतराणीव । दुर्दशस्य चतुर्दश ॥
हायनानि व्यतीतानि । प्रियाविरहिणस्तदा ॥ ७८ ॥ कदाचिदुपदाहस्तः। स्वर्णापणमहाजनः
॥ नरमेकं पुरस्कृत्य । महीपतिमुपाययौ ॥ ७९ ॥ व्यज्ञपयच्च राजेंद्र । कश्चिदेष नरो नवः
॥ विपणावत्र विक्रेतु—मानिन्ये रत्नकंकणं ॥ ८० ॥ युष्मन्नामांकमेतच्च । वीक्ष्यास्माभिः स-
विस्मयैः ॥ इहोपानीतमित्युक्त्वा । वणिजस्तदढौकयन् ॥ ८१ ॥ नृपोऽप्यादाय तद्वी—क-

॥ ८ ॥

रसंपर्कपावनं ॥ उरसि प्रबलप्रेमा । ददौ दध्यौ च चेतसि ॥ ७३ ॥ मम प्राणेश्वरी कापि । किमु प्राणैरमुच्यत ॥ एतस्या हस्तमध्यास्त । यदिदं रत्नकंकण ॥ ७४ ॥ अनिष्टयाऽनया यद्वा । किममंगलचिंतया ॥ रत्नकंकणवृत्तांतं । वेद्मि तावन्नरादतः ॥ ७५ ॥ इति ध्यात्वा तमप्राक्षी–द्भुपतिर्भद्रको भवान् ॥ कथ वा क्वापि वा लेभे । त्वयैदं कंकणाद्भुतं ॥ ७६ ॥

अथासौ कथयामास । पृथिवीश निशम्यतां ॥ व्याधोऽहं भीमनामास्मि । मलयोपांतभूमिषु ॥ ७७ ॥ उपादाय मयानेक–मत्ताऽनेकपकुंभतः ॥ मुक्ताभिर्भूपितश्चक्रे । सर्वो व्याधवधूजनः ॥ ७८ ॥ चित्रकायनिकायो यः । प्रसभ निहतो मया ॥ तस्यैताः कृत्तयश्चित्राश्चित्रं सर्वत्र कुर्वते ॥ ७९ ॥ एकदाऽपश्यमुत्पश्य–न्मयूखमणिशेखर ॥ श्रीखंमतरुखंडेपु । विचरंतमहीश्वर ॥ ९० ॥ अथ स्फुटफटारत्न–जिघृक्षालिप्तमानसः ॥ तं कथंचिन्महाभीम । भोगिनं धृतवानहं ॥ ९१ ॥ तस्य कुंभलिनस्तुड–च्छेदच्छेकां कृपाणिकां ॥ व्यापारयंस्तदाऽश्रौष । मामेति ध्वनिमुच्चकैः ॥ ९२ ॥ ध्वनेरध्वनि निक्षिप्त–चक्षुषा वीक्षितो मया ॥ बालकः पाणिमुद्यम्य । प्रतिषेधपरः पुरः ॥ ९३ ॥ मया गले गृहीतस्य । तस्याहेर्बालकंप्रति ॥ पे-

तुर्णोष्पतरत्तारा । दैन्यैकपिशुना दृशः ॥ ९४ ॥ मयापि बालमालोक्य । त्रैलोक्याश्चर्यकारि-
णं ॥ मेने मानुष्यलोकोऽयं । स्वर्गलोकविजित्वरः ॥ ९५ ॥ पिबन् रूपामृतं तस्य । नेत्रां-
जलिपुटैरहं ॥ न प्राप्नुवं च विस्मेर–विस्मयस्तृप्तिसंपदः ॥ ९६ ॥ उपेत्य मामसौ भिल्लः ।
ससंरंभमभाषत ॥ मास्म मास्म वधीर्व्याध । नागमेनमनागसं ॥ ९७ ॥ प्रिये पल्लविता-
नंद–श्चंदनद्रुमकानने ॥ अयं भोगी महाभाग । क्रीडाभिरभिनंदतु ॥ ९८ ॥

अथाहमवदं भद्र । भद्रमध्येष्यते त्वया ॥ न पुनर्मे दया ह्यस्ति । तृष्णानिष्णातचेत-
सः ॥ ९९ ॥ असावतिचिराल्लब्धो–ऽधुनाऽनर्घ्यो मया मणिः ॥ भविता मम कांतायाः । मु-
क्ताहारस्य नायकः ॥ १००॥ मणिमात्रकृते त्वं चे–न्नागमेनं हनिष्यसि ॥ मा वधीस्ते मणी-
न् दास्ये । प्रोच्येत्यारादसौ ययौ ॥ १ ॥ देहीमं कंकणं मात–रिति श्रुत्वा तयाऽर्पितं ॥ ज-
नन्याऽभ्यर्णवर्त्तिन्या । तदादायाऽऽययौ पुनः ॥ २ ॥ ममाऽवादीच्च सोत्साहं । गृहाणेदं च कं-
कणं ॥ नागं मुंचेत्यसौ जल्प–न्नेतदर्पितवान्मम ॥ ३ ॥ एष नागशिखाचुंबी । मणिः कंक-
णवर्तिनः ॥ एकस्यापि मणेर्भासा–मंशं नाप्नोति षोडशं ॥ ४ ॥ अयं च वाक्सुधासिंधु—

न्नृशमर्थयते शिशुः ॥ जीवत्वयमिति ध्यात्वा । तं नागं मुक्तवानहं ॥ ५ ॥ युग्मं ॥ तं प-
न्नगं विपन्नया । आकृष्य विकसन्मुखः ॥ अत्युदात्तकुलो बालः । स्वस्थानमगमत्ततः ॥ ६ ॥
असामान्यगुणग्रामं । प्राणरक्षापरायण ॥ अधमर्णमनोवृत्तिः । पन्नगोऽपि तमन्वगात् ॥७॥
शिशोस्तेन पवित्रेण । चरित्रेण चमत्कृतः ॥ समागत्याहं गेहिन्याः । कंकणं तदुपानयम् ॥
॥ ८ ॥ इदानीं पंचमाद्वर्गात् । समर्घ्यमणिकंकणं ॥ प्रेमप्रकर्षवाहिन्या । गेहिन्या प्रहितोऽ-
स्म्यहं ॥ ए ॥ जणितश्च तया कांत । कोशाम्बीं गच्छ संप्रति ॥ एतद्विक्रीय मद्योग्यं । ताडंकद्व-
यमानय ॥ १० ॥ ततः प्रापमिहावाय । तदेतन्मणिकंकणं ॥ या देवेन समादिष्टा । तदियं क-
थिता कथा ॥ ११ ॥

क्षितीशः शुश्रुवानेव । चिंतयामास चेतसि ॥ दिष्ट्या जीवति देवीति । स्मृत्वा हृदयेऽ-
नृत्यत ॥ १२ ॥ अचिरान्नयने जाति । जवतोरपि पारणं ॥ जविता तत्परिरंजा—वांछित वां
भुजावपि ॥ १३ ॥ यथाश्रुतः सुतोऽप्येष । मदीयो यदि संज्जवेत् ॥ जयत्येकः शतानीक—
स्तदा स्वर्भूभुवस्त्रये ॥१४॥ ममेदृशी कुतो वास्ति । जालन्यस्ताक्षरावलिः ॥ जवेशमस्य सी-

तेव । मम लब्ध्या मृगावती ॥ १५ ॥ पंचवर्षांतरा वार्त्ता । यद्यप्येषा तथापि तं ॥ देशं गं-
तास्मि तत्पूत–मित्यालोच्य नृपोऽवदत् ॥ १६ ॥ तं देशं दर्शयास्माकं । महाभाग भवाग्रतः
॥ इत्युक्त्वा तस्य ताडंक–प्रभृत्याभरणं ददौ ॥ १७ ॥ महाजनं विसृज्याथ । न्यस्य राज्यं
युगंधरे ॥ सुमतीपेन सेनान्या । सहितश्चलितो नृपः ॥ १८ ॥ तेनाऽखंडप्रयाणेन । प्रपेदे म-
लयाचलं ॥ भूमिविदाथ भीमेन । जगदे जगदीश्वरः ॥ १९ ॥ स एष मलयो देव । यन्मै-
त्रीमात्रगर्वितः ॥ अभूद्विरहिणो नूनं । सद्यः प्राणहरो मरुत् ॥ २० ॥ राजंस्तव तु जीवातु–
र्वल्लभालाभतोऽस्त्वयं ॥ इदानीं त्वनुजानीहि । स्वस्थानं गमनाय मां ॥ २१ ॥ पावनः पुरतो
देव । मुनीनामयमाश्रमः ॥ तपस्विशापभीरूणां । मादृशां न हि गोचरः ॥ २२ ॥ उपका-
रोत्तमर्णस्य । तस्यालंकरणं ततः ॥ प्रसादीकृत्य कृत्यज्ञो–ऽनुमेने गमनं नृपः ॥ २३ ॥ अ-
थोत्सुकः पुरो गच्छं–स्तुच्छतरपरिच्छदः ॥ सुमतीपं समीपस्थं । सप्रसादं जगाद सः ॥ २४ ॥
मृगावतीवियोगार्त्तं । प्रवर्द्धिष्णुरसौ भृशं ॥ उन्मदश्चंदनामोदो । मां दुनोति पदे पदे ॥
॥ २५ ॥ धैर्यं ममापि केकाभिः । खंडयंति शिखंडिनः ॥ एतदभ्यर्णकर्णा तु । क वा देवी

न्नविष्यति ॥ २६ ॥ यथामी तरवो मूले । वेदीबद्धमनोहराः ॥ तथा ध्रुवमदं मन्ये । ताप-
सानामिय मही ॥ २७ ॥ कृतमालतमालादि—पादपश्रेणिसंकुलाः ॥ नेत्रानंदकमां लक्ष्मीं ।
दधत्याश्रमन्नूमयः ॥ २८ ॥ वहिस्तपोवनस्थाना—दवस्थाप्य विरूथिनीं ॥ नृपोऽथ सुप्रतीप-
न । सममाश्रममाविशत् ॥ २९ ॥ अदर्शयच्च तस्यासौ । पुरः पश्य तरोरधः ॥ सिंहोत्संग-
निषसिणं । नकुलाश्रितपन्नग ॥ ३० ॥ तपस्विकन्यकाहस्ता—त्सदा विश्वस्तचेतसः ॥ रत्नसे-
नेह नीवारान् । मृगाः कवलयंत्यमी ॥ ३१ ॥ ममाय पश्य दंडेश । बाहुः स्फुरति दक्षिणः ॥
एतच्च दक्षिणं चक्षु—रयं चाधरपल्लव. ॥ ३२ ॥ सेनानीरवदत्तस्तु । दर्शयन्निदमद्भुतं ॥ पुष्पि-
तः शकुनस्तेऽमौ । फलिष्यति पुरः पुनः ॥ ३३ ॥ बालोऽपि महिमान्नोग—सुन्नगो न्नावुको-
दयः ॥ कश्चिन्मुनिकुमारोऽय—मित एवान्निवर्त्तते ॥ ३४ ॥ बाल. किरणमालीव । डुरालोकः
स्वतेजसा ॥ अश्ववेंडुरिवानद—निस्यंदी नेत्रयोरयं ॥ ३५ ॥ कथंचिद् डुर्मनीन्नूतः । सैष वाक्यैः
प्रियंकरैः ॥ ज्यायसा मुनिना तेन । प्रणयादनुनीयते ॥ ३६ ॥

ऊचे नृपश्चमूनाथ । कथं बालोऽयमीदृशः ॥ निर्वृत्ताः कुर्वते वार्त्ता । नैव व्यावर्त्तनं प्र-

ति ॥ ३७ ॥ अस्मिन्नदृष्टपूर्वेऽपि । किमु स्निह्यति मे मनः ॥ तदयं किमु नागस्य । न त्वे-
दन्नयंकरः ॥ ३८ ॥ एतैर्वा किमु संकल्पै–रेतन्निश्चिनुतान्मुनिः ॥ एवमालोच्य तौ प्रीत्या ।
ततस्तं जग्मतुर्यतिं ॥ ३९ ॥ अभिवंद्य ततश्चाद्यं । तत्सांत्वनपरं मुनिं ॥ तौ रसालतलासी-
नौ । विश्रामार्थं वभूवतुः ॥ ४० ॥ नृपोऽपृछन्मुने वालः । कोऽयं वा कस्य वा सुतः ॥ का-
स्य वा जननी धन्या । किं चायं दुर्मनायते ॥ ४१ ॥ मुनिरूचे कथामेतां । कथयामि निश-
म्यतां ॥ महातपस्विनां धाम । धर्मारामोऽयमाश्रमः ॥ ४२ ॥ ब्रह्मभूतिरिह ख्यातः । पति-
रास्ते तपस्विनां ॥ विश्वभूतिः प्रियः शिष्यः । सदयस्तस्य विश्रुतः ॥ ४३ ॥ सोऽन्यदा मु-
क्तिसंदेशा–दादेशात्स्वगुरोर्गतः ॥ समित्समृद्धिमानेतुं । मलयाद्रेरधित्यकां ॥४४॥ अकस्मा-
द्विस्मयोत्फुल्ल–नेत्रः कौसुंभवाससां ॥ सपुष्पमालां मूर्छालां । वालामालोकयच्च सः ॥ ४५ ॥
तस्याः प्रशस्यकारुण्यः । स्वकमंडलुवारिभिः ॥ मूर्छाछेदाय सोत्सुक्य–श्छेकः सेकं चकार
सः ॥ ४६ ॥ ततोऽधिगतचैतन्या । वितत्याश्रुकणोत्करं ॥ स्फीतप्रीतिरवा पूर्ण–रोदरंध्रं रुरोद
सा ॥ ४७ ॥ आर्यपुत्र महावाहो । रक्ष रक्ष क्षितीश्वर ॥ इत्थं सा रुदती शैल–पादपानत्य-

रोदयत् ॥ ४८ ॥ आकस्मिकः कथं नाथ । प्रथमो मे समुच्छितः ॥ जवदुत्संगखेलिन्या । दु-
स्सहो विरहानलः ॥ ४९ ॥ त्वद्वियोगे मम स्वामिन् । जवेन्मृत्युरसंशयं ॥ यदि न स्यात्तव
न्यासो । गर्नमूर्त्तिर्मदंतिके ॥ ५० ॥ पर्वतं सर्वतो जीमं । पन्नयां चंक्रमणाऽक्रमं ॥ नैव जी-
वेश जानामि । त्वत्प्रसादवशंवदा ॥ ५१ ॥ तदिदानीमनाथाहं । नाथ यूथपरिच्युता ॥ मृगी-
व क्व विन्नो यामि । श्रयामि शरणं च कं ॥ ५२ ॥

विलापानिति कुर्वाणा । करुणाक्षीरसागरः ॥ कांदिशीकदशां दीनां । स्पृशंतीं व्याहर-
न्मुनिः ॥ ५३ ॥ अयि मा त्वं स्पृश त्रास—मेनोऽस्मि तव बांधवः ॥ सुखमेहि मया सार्द्धं ।
त ध्वस्तश्रममाश्रमं ॥ ५४ ॥ बान्धवेति ध्वनिं श्रुत्वा । सुधासिक्तेव सा मुदा ॥ मुनिं निन्ना-
लयामास । स्वच्छवत्सलया दृशा ॥ ५५ ॥ अवादीच्च ममाद्यापि । जाग्यं जागर्त्ति किंचन ॥
लीलया शीलरक्षाये । बंधुर्यन्मिलितोऽसि मे ॥ ५६ ॥ श्रियं च प्रियसंगं च । दैवन हरता-
पि मे ॥ न किंचित्तकृन मन्ये । शीलं चेन्निर्मलं मम ॥ ५७ ॥ तव निःकृत्रिमप्रीते—र्वेश्मो
वेश्मनि निर्वृता ॥ सीतेव वज्रजंघस्य । प्राप्नुयां प्रसवोत्सवं ॥ ५८ ॥ इति व्याहृत्य सा बा-

ला । सहिता विश्वभूतिना ॥ गत्वाश्रमे कुलपतिं । ब्रह्मभूतिमवंदत ॥ ५९ ॥ सार्वभौमः सु-
तो भूया—द्भवत्याः प्रियदर्शने ॥ इत्याशीर्भिर्मुनींद्रेण । सत्याभिः साभिनंदिता ॥ ६० ॥ तेनै-
वाथ तदुक्तेन । तां नाम्ना प्रियदर्शनां ॥ प्रणयाद्विनयप्रह्वा—माह्वयंत सतीं जनाः ॥ ६१ ॥ त-
या सकृपया लक्ष्मी—रियं भावुकदेहया ॥ तडाग इव पद्मिन्या । शुशुभे भृशमात्मनः ॥६२॥
अंबाभिरिव वृद्धाभि—स्तापसीभिः पदे पदे ॥ स्वयं विहितशुश्रूषा । सा गर्भं पर्यपाल-
यत् ॥ ६३ ॥ स्वं क्षेत्रे च समुच्चंच—ज्ञातवस्तुग्रहेष्वथ ॥ योगं पुष्यति पुष्येण । रजनीजी-
वितेश्वरे ॥ ६४ ॥ स्वैरमुज्जागरज्ज्योति—र्ध्वस्तांधतमसोदयः ॥ प्रादुर्बभूव पूर्वस्यां । भानु-
स्तस्यां च नंदनः ॥ ६५ ॥ उदंचत्पुष्परोमांचा—स्तदानीं काननश्रियः ॥ शकुनिध्वनिभिश्च-
क्रुः । प्रमोदोलूलुमंगलं ॥ ६६ ॥ आश्रमस्य महोत्साह—कारिणो द्वारि तोरणं ॥ चक्रे मुनि-
भिरानंदा—न्माकंदतरुपल्लवैः ॥ ६७ ॥ भवादृशोऽजनि क्षोणी—रत्नं कश्चित्पुमानिति ॥ दिक्-
पालानामिवाख्यातुं । प्रचेलुर्दिक्षु पक्षिणः ॥ ६८ ॥ उच्चैःस्वरेण संभूय । बटवः पटवस्तथा
॥ पेठुः पाठांश्च शास्त्रस्य । मांगल्यस्य ध्वनीनिव ॥ ६९ ॥ मरंदबिंदुनिःस्यंद—शमिताश्रम-

॥ १६ ॥

रेणवः ॥ पतद्भिस्तरवः पुष्पैः । पुष्पप्रकरमादधुः ॥ ७० ॥ न परं मुनिपत्नीनां । स्वभाव-
स्निग्धचेतसां ॥ सुखमुज्ज्वलमत्यंतं । बभूव ककुभामपि ॥ ७१ ॥ तपस्विकाननश्रेयः—स्रवं-
तीस्नानपावनः ॥ मंदमांदोलितांभोज—काननः पवनो ववौ ॥ ७२ ॥ प्रत्येकमुटजद्वारि । व-
ल्कलैर्दूरमुच्छ्रितैः ॥ चक्रे तज्जन्ममुदितै—श्चेलोत्क्षेपस्तपस्विभिः ॥ ७३ ॥ प्रथमं वाधवास्त-
स्या । वनवृद्धास्तपोधनाः ॥ आशीर्भिर्वर्धयतिस्म । नीवाराक्षतपाणयः ॥ ७४ ॥ वैखानसा-
न्वितास्तस्याः । सूतिकर्म कृपापराः ॥ तत्तन्निवर्तयांचक्रु—रर्द्धप्रथमिकया स्यात् ॥ ७५ ॥ न
केवलं तदा प्रापुः । सुखं वैखानसाः परं ॥ अमुक्तोटजपर्यंता—स्तिर्यंचोऽपि मृगादयः ॥७६॥
स्वयं कुलपतिस्तस्य । शिशोर्जात्यमणेरिव ॥ तदा चकार संस्कार—माढ्यभावुकतेजसः ॥
॥ ७७ ॥ किमस्य नाम संस्थाप्य—मितिचिंतापरैस्तदा ॥ ईदृशी तापसैर्व्योम्नि । समाकर्ण्य-
त भारती ॥ ७८ ॥ कलाकलापसंपूर्णः । क्षोणीरक्षणदक्षिणः ॥ असावुदयनो नाम्ना । सार्व-
भौमो भविष्यति ॥ ७९ ॥

निरस्यैवं क्रियाः सम्यक् । विधाय ब्रह्मभूतिना ॥ तदेवास्य तदा नाम । विधिज्ञेन व्य-

धीयत ॥८०॥ स तान्निर्मुनिनारीभि–श्चिंत्यमानो निरंतरं ॥ वने रसालवद्बालो । दधौ वृद्धिं-
दिने दिने ॥ ८१ ॥ भूतपूर्वनरेंद्रेण । मुनींद्रेण यथोचितं ॥ आहितः प्रतिभोत्तालः । स बा-
लः सकलाः कलाः ॥ ८२ ॥ इदानीं तु किमप्यन्य–त्तस्य तेजो विराजते ॥ सहते न तिर-
स्कारं । यथा कुलपतेरपि ॥ ८३ ॥ मदाऽसहिष्णुः समदैः । कलभैः कलहायते ॥ साहंका-
रान् साहंकारः । स निहंति हरीनपि ॥ ८४ ॥ अधमाऽधमधौरेयः । पातकी स पिता तव
॥ स्मरत्यद्यापि निर्लज्जो । न यः पुत्रकलत्रयोः ॥ ८५ ॥ श्रुत्वेति तातवैभाष्यं । हास्यात्के-
नाप्युदीरितं ॥ स्फुरत्कोपफटाटोपः । स फणीवाद्य ताम्यति ॥ ८६ ॥ युग्मं ॥ असूयति त-
पस्विभ्यो । न मुनींद्रं नमस्यति ॥ आश्रमेऽपि स विश्रामं । नैव रोषाच्चिकीर्षति ॥ ८७ ॥
नवपक्षबलोत्कंठ–पक्षीवोड्डीय स क्षणात् ॥ झटिति तत्पितुः पार्श्व–मुत्सुको गंतुमिच्छति ॥
॥ ८८ ॥ सर्वैर्निवार्यमाणोऽपि । मात्रा वित्रासितोऽपि च ॥ भोक्ष्येऽहं पितरं वीक्ष्य । प्रति-
ज्ञामिति स व्यधात् ॥ ८९ ॥ असामान्यमनःस्नेहा–दन्वितो विश्वभूतिना ॥ उत्तालः सोऽधु-
ना बाल–श्चचाल व्यालवद्बलात् ॥ ९० ॥ विश्वभूतिर्मुनिः सोऽह–मसावुदयनः स च ॥ त-

दत्रानुनयाम्येन—माग्रदग्रदिलीकृतं ॥ ए१ ॥ एतन्मातापि सप्रेमा । स्वप्रेयसि महासती ॥ इदानीमनुगछंती । सुतमेष्यति सत्वरं ॥ ए२ ॥

एवमाकर्ण्य तां वाच । वाचयमशिरोमणेः ॥ सवितर्कस्पृहौत्सुक्यो । बालमालोकयन्नृपः ॥ ए३ ॥ अवोचत-च दंमेश । सदृशोऽयं कथारसः ॥ पर क ज्ञागधेयाना—मीदृशामदृमास्पदं ॥ ए४ ॥ मन्ये धन्यं तमेवाहं । बालार्क इव तेजसा ॥ अलंकरोति यस्यायं । बालः कुलनन्नस्तलं ॥ ए५ ॥ व्याजहाराथ तं दूर—प्रसारितभुजद्वयः ॥ एह्येहि वत्स सर्वांगे । मामालिंग्य सुखं कुरु ॥ ए६ ॥ अहमेकं शतानीकं । पितरं वेद्मि नेतरं ॥ इति वाचा निराचक्रे । बालस्तं न तु चेतसा ॥ ए७ ॥ सुप्रतीपस्ततः प्राह । देव दृग् दीयतामितः ॥ देवीयं राज्यजीवातु—र्दिष्ट्याऽभ्येति मृगावती ॥ ए८ ॥ नव्यवानेयपाथेय—पाणिभिर्मृदुवाणिभिः ॥ अन्वीयमाना पर्यश्रु—मुनिसीमतिनीजनैः ॥ एए ॥ हृद्यस्वाद्यफलोपेता । पुष्पमालोपशोभिनी ॥ संवीतवल्कला साक्षा—द्वनश्रीरिव सुव्रता ॥ १०० ॥ क्षणं स्निग्धे क्षणं रूक्षे । क्षणं धीरे क्षणं चले ॥ ससंदेहतया देवी । न्यस्यती च विलोचने ॥ १ ॥ चतुर्भिः कलापकं ॥ ज-

न्मीलन्नेत्रपद्मेन । निश्छद्मप्रेमशालिना ॥ राज्ञा हस्तगताऽज्ञायि । तामालोक्य त्रिलोक्यपि
॥ २ ॥ सुप्रतीपं नृपः प्राह । जीवंस्तद्विरहेऽप्यहं ॥ दर्शयिष्ये कथं देव्या—स्त्रपावनतमान-
नं ॥ ३ ॥ त्रपाकर्तृकमेतस्या । न मालिन्यं मनागपि ॥ मदीयगर्व्वनिक्षेप—रक्षिणीयं स्थि-
ता यतः ॥ ४ ॥

तन्नन्न न्नद याचेथा—स्तथा विस्मृतिमागसां ॥ मयि धत्ते यथा देवी । प्रसादविशदं म-
नः ॥ ५ ॥ सुप्रतीपस्ततोऽभ्येत्य । सादरः पादयो रुदन् ॥ निपपात मृगावत्या—स्तापसीनां
पुरस्तदा ॥ ६ ॥ साथ तोयविपद्द्वीप । सुप्रतीप श्रय श्रियं ॥ इत्याश्वास्य तमुत्थाप्य । नि-
जगाद सगद्गदं ॥ ७ ॥ बहुप्रियस्य नूनन्तु—रस्म्यहं यदि विस्मृता ॥ तेजोमयः किमात्मीयः
। सैष न्यासोऽपि विस्मृतः ॥ ८ ॥ विदीर्णप्रायहृदये । श्रुत्वेदं मेदिनीपतौ ॥ तथा चोदयने
पश्य—त्यानंदोत्फुल्ललोचने ॥ ९ ॥ यां दशामन्वभूद्देव—स्तां विदुर्देवताः परं ॥ तदेषः खिद्य-
ते देवः । प्रसादः क्रियतामतः ॥ १० ॥ इति विज्ञप्य सेनानी—रानीय शिरसि क्रमौ ॥ सर्वे-
षां पश्यतां तस्या । निजकेशैरमार्जयत् ॥ ११ ॥ त्रिभिर्विशेषकं ॥ उपसृत्य ततः साश्रु—

स्मेरप्रेमा मृगावती ॥ स्निग्धचक्षुः सरोमांचा । जीवितेशमवोचत ॥ १२ ॥ लज्जयाऽत्राङ्मु-
खं नाथ । कुर्वीथा मुखमुन्मुखं ॥ प्रेयसी नास्मि चेत्कस्मा-दियतीं भुवमन्यगाः ॥ १३ ॥
निजमेतज्जगज्जैत्र । पुत्रपर्यायमजसा ॥ मत्प्राणरक्षणारक्ष । कुर्वनुग्रहपात्रतां ॥ १४ ॥ कचे
सुतं च यत्र त्व । सोत्कठः सैप ते पिता ॥ स्वयमागात्तदुत्तिष्ठ । वत्स नत्या प्रणम्यतां ॥
॥ १५ ॥ तच्छ्रायोदयनः पादौ । ववंद च पितुर्मुदा ॥ समारोप्य पिताऽप्यंक-मेनमानंदतोऽ-
वदत् ॥ १६ ॥ महोत्सवोऽथ वत्सेषु । श्रीरघाश्रयनिर्वृता ॥ दृढालंबाद्य कौशांबी । वत्स त्व-
यि विजित्वरे ॥ १७ ॥ वाचंयममथाऽवोच-न्मुने न प्रज्ञविष्णवः ॥ तवोपकारव्यापार-क-
थाव्यावर्णने वयं ॥ १८ ॥ देवीं दैववशात्प्राप्त-पर्वतामुपकुर्वता ॥ त्वयाद्य मम गोत्रस्य ।
प्राणसत्रमसूत्र्यत ॥ १९ ॥ ततस्तैः सहितो गत्वा-ऽनमत्कुलपतिं नृपः ॥ असावभ्यर्थ्यान्निरा-
शीर्नि-रभ्यनंददमुं मुहुः ॥ २० ॥ तस्याऽऽसाद्य ततोऽनुज्ञा-मनुज्ञापिततापसः ॥ समं पु-
त्रकलत्राभ्यां । प्रतस्थे नगरीं नृपः ॥ २१ ॥ स्कंधावारमधिष्ठाय । प्रयाणोत्सुकमानसः ॥
अतिक्रम्य क्रमान्मार्गं । स निजामागमत्पुरीं ॥ २२ ॥

॥ २१ ॥

ततो युगंधरामात्य–प्रवर्त्तितमहोत्सवं ॥ सोऽध्यवास पुरीमध्यं । मध्यंदिनरविद्युतिः ॥
॥ २३ ॥ तदा रराज राजेंदु–र्जनेंदीवरबांधवः ॥ शुभ्रैर्धवलयन् सांद्र–यशश्चंद्रातपैर्दिशः ॥२४॥
संचरिष्णुः सदाचार–पूतात्मनि स वर्त्मनि ॥ अहव्यास्खलितं मेने । तृणाय त्रिदशाधिपं ॥
॥ २५ ॥ दैन्यवंतः कृपावत्या । मृगावत्याश्च मोचिताः ॥ विपक्षक्षोणीभृद्बंदि–गणास्तस्या ज-
गुर्यशः ॥ २६ ॥ तया देव्या तथा दाना–द्दीनोद्धरणमादधौ ॥ अजायत यथा नून–मदीनं मे-
दिनीतलं ॥ २७ ॥ मर्माविधमधर्मस्य । जीवितं सुखसंपदां ॥ जिनधर्मं पुरस्कृत्य । सा ते-
पे दुस्तपं तपः ॥ २८ ॥ प्राणिनां मृत्युभीताना–मभयोद्घोषणादिकं ॥ भूरिभद्रकरं कर्म ।
निर्ममे सा दिवानिशं ॥ २९ ॥ तं जग्राह गुणग्रामं । कुमुदोदरसोदरं ॥ कुमारोऽपि समा-
रोपि । मानसे येन कोविदैः ॥ ३० ॥

आस्थानीमास्थिते राज्ञि । कुमारसहितेऽन्यदा ॥ वीणां च वादयामास । विज्ञः क-
श्चित्तु वैणकः ॥ ३१ ॥ स वीणापाणिरारेभे । कुमारोऽप्युपवैणवं ॥ प्रादुष्करोति हि गुणी ।
गुणं गुणवतां पुरः ॥ ३२ ॥ कुमारवल्लकीनाद–सुधापानैः सभासदां ॥ अक्षैरन्यैर्निजैकत्र ।

॥ २२ ॥

श्रोत्रे वृत्तिः समर्पिता ॥ ३३ ॥ तेनोपवीणिते गीत–प्रबंधे मूर्द्धनिश्चलैः ॥ सदःपद्मवनं वायु–लोलैरब्जैरिवावभौ ॥ ३४ ॥ कलाकौशलमालोक्य । सुतस्याऽलौकिकं तदा ॥ विस्मयस्मेरिताक्षेण । कौशाम्बीपालेन पिप्रिये ॥ ३५ ॥ जगदे च कुतो वत्स । संक्रांतोऽयं कलाक्रमः ॥ न मानुषीषु भूमिषु । सैषा शिक्षा निरीक्ष्यते ॥ ३६ ॥ व्याजहार कुमारोऽथ । विनयाद्विहितांजलिः ॥ कथावधानदानेन । क्षणं देव प्रसीदतु ॥ ३७ ॥ कंकणेन फणी पूर्वं । मया व्याघ्राद्विमोचित. ॥ अनुगम्य स मां किंचि–द्दिव्यमूर्तिरवोचत ॥ ३८ ॥ राजपुत्रात्मनो मित्रं । जन्मांतरतिरोहितं ॥ मुख्यं नागकुमाराणां । विद्धि मां किन्नराभिधं ॥ ३९ ॥ त्वत्कारुण्य परीक्षार्थं । नागरूप मया कृतं ॥ अन्यथा किंच न व्याघ. । सव्यथ प्रभवेन्मम ॥४०॥ कारुण्येन तवाऽनेन । मदीयं मुमुदे मनः ॥ कोवा मित्रावदातेन । दानेन च न तुष्यति ॥४१॥

शतानीकः पिता यस्य । माता यस्य मृगावती ॥ त्रैलोक्याद्भुतरूपस्य । तस्य किं वर्ण्यते तव ॥ ४२ ॥ एतस्माद्धर्मजीवातोः । करुणापरिणामतः ॥ उन्मीलत्पुण्यसंभारः । सार्वभौमो भविष्यसि ॥ ४३ ॥ राज्यं निष्कंटक दीर्घ–मायुर्वपुरनामयं ॥ करुणाकल्पवल्लीय ।

प्रसूते तदिदं फलं ॥ ४४ ॥ किंचास्ति बहुरत्नेति । पाताले नगरी मम ॥ क्रीडास्पदं सखे त-
त्तां । पुनीहि पदपांशुभिः ॥ ४५ ॥ प्रथमप्रार्थनां नैनां । वृथा त्वं कर्त्तुमर्हसि ॥ इत्युदीर्य
बलात्तस्यां । सोऽतिस्नेहान्निनाय मां ॥ ४६ ॥ अमरावत्यहंकार—निराकरणकोविदा ॥ मणि-
क्षीणतमःप्रेक्षा । प्रेक्षांचक्रे पुरी मया ॥ ४७ ॥ सत्कारस्तत्र यस्तेन । निर्मितो मम तं पुनः
॥ नाहं सहस्रजिह्वोऽपि । ध्रुवं शक्नोमि जल्पितुं ॥ ४८ ॥

इयं घोषवती तेन । दत्ता सोपनिषन्मम ॥ जन्मांतराधमर्णेन । ऋणं सर्वत्र दीयते ॥
॥ ४९ ॥ कियतोऽपि मया काला—न्मातुरातुरमानिना ॥ स प्रार्थितः सखे यत्र । ममांबा त-
त्र मां नय ॥ ५० ॥ ततस्तेनाहमानीतः । कृशामकृशवैवशां ॥ मन्मार्गदत्तनयनां । अपश्यं
जननीं निजां ॥ ५१ ॥ किन्नरोऽपि नमन्मौलिः । प्रणम्य मम मातरं ॥ साश्रुर्जगाद मे दि-
वि । विप्रियं क्षम्यतामिदं ॥ ५२ ॥ यदेनमंब निर्बंधा—न्नयता तनयं तव ॥ भूयः संधुक्षितो
दूरं । मया दुःखाशुशुक्षणिः ॥ ५३ ॥ किं चातः पंचमे वर्षे । संयुज्य प्रेयसा समं ॥ भुक्त्वा
साम्राज्यलक्ष्मीं च । क्रमाद्भर्त्तुः सुतस्य च ॥ ५४ ॥ स्वयं वीरजिनेंद्रेण । दत्तमासेदुषी व्रतं ॥

लप्स्यसे तामपि स्फीतां । मातर्निःश्रेयसश्रियं ॥ ५५ ॥ कदाचित्किंकरत्वेन । स्मर्त्तव्योऽयं जनः पुनः ॥ इत्यामंत्र्य स तौ स्नेहा—द्भुजंगोऽगाद्यथागतः ॥ ५६ ॥ ततोऽभूत्पंचमे वर्षे । देवेन सह संगमः ॥ विज्ञता तातपादाना—मियं घोषवतीकथा ॥ ५७ ॥ इत्याकर्ण्य महीनाथः । सप्रमोदमचिंतयत् ॥ श्लाघ्योऽहं यद्गुणैरेव । सुतेनास्मि पराजितः ॥ ५८ ॥ भानुनेवामुनारेजे । मम गोत्रनभस्तलं ॥ राज्य त्रिजगदिष्टेन । सावष्टंभमनेन मे ॥ ५९ ॥ कृत्वैवं मानसे भूमि—वासवः शुभवासरे ॥ राज्यमूर्त्तां कुमाराय । यौवराज्यश्रियं ददौ ॥ ६० ॥ महेभः कलभेनेव । किशोरेणेव केसरी ॥ उन्नतेन समत्वेन । कुमारेण वभौ नृपः ॥ ६१ ॥

महाबलेन भूपाल—प्रतापाग्निरदीप्यत ॥ तथा तेन यथाऽराती—द्वैरिवंशानशोषतः ॥६२॥ सूनुना राज्यधुर्येण । सूर्यं निर्जितवान्नृपः ॥ सुतस्तस्य शनिर्येन । नाऽभूत्पितृपदक्रमः ॥६३॥ कीर्त्तिं चिराय चतुरार्णवकूलगालि—लीलावनभ्रमणदुर्ललितां विधाय ॥ एकातपत्रमनुपत्रमभुक्त लक्ष्मीं । स क्ष्मापतिः पृथुगुणः प्रशशास पृथ्वीं ॥ ६४ ॥ इति मलधारिश्रीदेवप्रभसूरिविरचिते मृगावतीचरित्रे मृगावतीसमागमो नामा प्रथमो विश्रामः ॥ श्रीरस्तु ॥

॥ अथ द्वितीयो विश्रामः प्रारभ्यते ॥

एकदानेकसामंत–संकुलं कुलकौस्तुभः ॥ विस्मयस्थानमास्थान–मध्युवास नराधिपः
॥ १ ॥ विनयाऽवनतो भूत्वा । भूपतेः स्वःपतेरिव ॥ जयंत इव पादांते । कुमारोऽपि न्यवि-
क्षत ॥ २ ॥ विद्यावृद्धवयोवृद्ध–समृद्धश्रियमात्मनः ॥ सभां जितसुधर्माण–मालोक्य मुमुदे
नृपः ॥ ३ ॥ अथ प्रसृमरप्रीति–विकस्वरविलोचनः ॥ स पुरस्तात्तमस्तोकं । सभालोकम-
भाषत ॥ ४ ॥ दंतिनस्ते तुरंगास्ते । ते रथास्ते पदातयः ॥ स कोशः सा च कौशांबी । त-
त्तदत्रास्ति वस्तु मे ॥ ५ ॥ तथापि बहुदृश्वानो । भवंतः कथयंतु तत् ॥ अन्यस्य भूपतेर-
स्ति । प्रशस्तं नास्ति यन्मम ॥ ६ ॥ इति राज्ञोदिते दूतः । पराकूतविचक्षणः ॥ दृष्टपूर्वा
पुरीः सर्वाः । कार्यसिद्धाभिधोऽभ्यधात् ॥ ७ ॥ देव देवकिरीटाग्र–शिखाचुंबिपदद्वयी ॥ म-
हत्यै स्पृहयत्येव । पुरुहूतोऽपि ते श्रिये ॥ ८ ॥ यत्तेऽस्ति जगतीनाथ । न तदन्यस्य कस्य-
चित् ॥ तरणेः किरणैः किं नु । खद्योतादिषु विद्यते ॥ ९ ॥ केवलं देव ते हर्म्यं । हारिणा
चित्रकर्मणा ॥ विकलं तिलकेनेव । वधूवक्त्रं न राजते ॥ १० ॥ पुष्पशेखरभूभर्तुः । सौधा-

लंकारकारणं ॥ चित्रशालां समालोक्य । नव्यां चित्रीयते जनः ॥ ११ ॥ तत्र चित्राद्भुतं दृ-
ष्ट्वा । विस्मितेनापि चेतसि ॥ प्रस्तावे देवपादाना-मियं विज्ञापिता कथा ॥ १२ ॥ निशा-
म्य तां गिरं राजा । जज्ञे चित्राय सस्पृहः ॥ चित्रेणाऽप्यधिकं मन्ये । न क्रमते क्षमाभुजः
॥ १३ ॥ ततश्चित्रकरश्रेणिं । स समाकार्य कार्यवित् ॥ सत्रामंमपचित्रार्थ-मादिदेश विशा-
रदः ॥ १४ ॥ तद्दृदेश्च यथायोग्य । तत्र चित्रकरान्प्रति ॥ विभागो विभिन्नागेषु । निर्ममे
चित्रकर्मणि ॥ १५ ॥ कोऽपि राज्ञोऽवदातानि । वादं कश्चिद्विपश्चितां ॥ प्रचक्रमे चित्रयितुं ।
महालक्ष्मीं च कश्चन ॥ १६ ॥ यस्तु निस्तुषविज्ञान-साध्यचित्रक्रियाक्रमः ॥ अंतःपुरविभा-
गोऽमू-चित्रणीयः प्रयत्नतः ॥ १७ ॥ तत्र चित्रक्रियात्यंत-निपुणो निपुणाग्रिमः ॥ चित्रं चि-
त्रकरः कर्तुं । सुरखमुपचक्रमे ॥ १८ ॥ युग्मं ॥

अन्यदा स पदाङ्गुष्ठं । मृगावत्याः पटांतरे ॥ प्रेखन्नखमणिज्योति-र्जटालं क्षणमैक्षत ॥
॥ १९ ॥ स च रूपं मृगावत्या-स्तस्मिन्नालिखितु क्वचित् ॥ कलासर्वस्वविन्यास-पूर्वमार-
भत क्षणात् ॥ २० ॥ तस्मिन्मृगावतीरूपे । तूलिकोन्मीलिते क्षणात् ॥ ऊरुमूले मषीबिंदुः ।

पपात सहसा ततः ॥ २१ ॥ विषादाश्रुचयं मुंचन् । प्रममार्ज स तं सकृत् ॥ भूयोऽपि नि-
पुणं तस्मिन् । कोपादिव पपात सः ॥ २२ ॥ भूयोऽप्यमार्जयत्खिन्न-मनाः स कथमप्यमुं
॥ पतिते पुनरप्यस्मिं-श्चतुरोऽचिंतयत्ततः ॥ २३ ॥ लांछनेनोरूमूलेऽस्या । भवितव्यमसंशयं
॥ किमन्यथा मषीबिंदुः । पतत्येव पुनः पुनः ॥ २४ ॥ ममादिष्टं हि तुष्टेन । यक्षेणाध्यक्ष-
मूर्त्तिना ॥ यत्त्वं दृष्टैकदेशोऽपि । सर्वं रूपं लिखिष्यसि ॥ २५ ॥ तदस्त्वेव प्रमृष्टोऽपि । पौ-
नःपुन्येन पातुकः ॥ एवं विचिंत्य तेनासौ । नापनीतो मषीलवः ॥ २६ ॥ अथोपेत्य पतिर्धा-
न्या-स्तत्र चित्रं विलोकयन् ॥ क्रमात्तत्राययौ यत्र । लिखितास्ति मृगावती ॥ २७ ॥ तस्मि-
न्मृगावतीरूपे । निकामं मग्नमानसः ॥ वेद वेद्यांतरं नासौ । योगी लीन इवात्मनि ॥ २८ ॥
अनिरूपं स तद्रूपं । निरूप्य स्म न तृप्यति ॥ वर्णयामास च प्रीति-पुलकांकुरदंतुरः ॥ २९ ॥
स्वस्त्यस्मै केशहस्ताय । भद्रं भालाय जायतां ॥ कल्याणं कर्णपाशाभ्यां । नासावंशाय मं-
गलं ॥ ३० ॥ कपोलौ वतरे नेत्रे । अरे बिंबाधरः कटः ॥ कंठः कटरे वक्षोजा-वरिरे कटरे
कटी ॥ ३१ ॥ अहो नाभिरहो मध्य—महो जघनसैकतं ॥ इति वर्णयतस्तस्य । स त्रिंड-

दंकपथ्र ययौ ॥ ३२ ॥

तं वीक्ष्य क्ष्मापतिर्दध्यौ । सर्वरामाविलक्षणं ॥ मदेकविषयं वेत्ति । देवीलक्ष्मं कथं त्व-
सो ॥ ३३ ॥ वीतव्रीडः स नीडस्था । विप्रतार्य प्रियां मम ॥ व्यक्तं सभुक्तवानेष । काको-
लः कोकिलामिव ॥ ३४ ॥ अन्यथा कथमत्रैव । देशे लक्ष्माऽयमालिखत् ॥ अर्थापत्त्यैष ते-
नाभू-द्भुक्तपूर्वमृगावतीः ॥ ३५ ॥ तदयं यौवनोन्मादा-दधीभूतमनाः खलु ॥ ममावरोधवि-
ध्वंसा-ज्जज्ञे धुर्योऽपराधिनां ॥ ३६ ॥ सुजात्यमस्य वैयात्य । निःसीमं चास्य साहसं ॥ म-
माप्यंतःपुरे येन । यद्वत्तः कामसौतिकः ॥ ३७ ॥ दंडनीतिविदां दंड्यो । नृपानां पारदारिकः
अन्योऽपि किं पुनः पापः । स्वांतःपुरविलोपकृत् ॥ ३८ ॥ अनेन कृपणान् प्राणान् । पणी-
कृत्य दुरात्मना ॥ कृत दुःकर्म कोऽप्येति । यस्य दंडो न तुल्यतां ॥ ३९ ॥ एवमालोच्य नृ-
पालः । करालभ्रुकुटीधरः ॥ तस्य शूलाधिरोपार्थ-मादिशद्दंडपाशिकं ॥ ४० ॥ धृतपंचशिखः
सा-मषीकृतविलेपनः ॥ विलबिंनिंबमालंवः । स्वनद्विस्वरदिंडिमः ॥ ४१ ॥ प्रसन्नं रासभा-
रूढः । प्रौढैरारक्षपौरुषै. ॥ शतैश्चित्रकरोऽयं त-द्वध्यस्थानमनीयत ॥ ४२ ॥ युग्मं ॥ सर्वे

चित्रकरास्ताव–देत्य व्यज्ञपयन्नृपं ॥ स्वामिन् किमेतत्क्रियते । त्वया राजनतांहिणा ॥४४॥
तस्मिन्नागसि तस्योक्ते । राज्ञा ते जगदुस्ततः ॥ यत्कृदत्तवरस्यास्य । नेदमागो मनागपि ॥
॥ ४४ ॥ तत्प्रसीदतु नः स्वामी । वरप्राप्तिकथां सकृत् ॥ आकार्य निजपादांते । देवो वि-
ज्ञापयत्वमुं ॥ ४५ ॥ वरोपपत्तिमाकर्ण्य । प्रत्यक्षेण परीक्ष्य च ॥ ततः करोतु देवोऽस्य । य-
न्मनोरुचितं भवेत् ॥ ४६ ॥

वचोयुक्तिरियं तेषां । नृपतिंप्रति मंत्रिभिः ॥ युक्तं देव भवत्वेव–मेवं स्थैर्यमनीयत ॥
॥ ४७ ॥ ततः सुवेषमाधाय । तं नरेशनिदेशतः ॥ पुनरास्थानमानिन्यु–रारक्षपुरुषाः क्षणा-
त् ॥४८॥ विज्ञायेति च राज्ञोक्तं । पुनरावृत्तिजीवितः ॥ सभासमक्षमक्षोभः । स जगाद कृ-
तांजलिः ॥ ४९ ॥ देवाहमत्रवास्तव्यः । परदारसहोदरः ॥ चित्रचित्रक्रियाऽवाप्ति–निपुणो
निपुणाभिधः ॥५०॥ लक्ष्मीनिकेतसाकेते । वृद्धा मातुः स्वसास्ति मे ॥ विचित्राख्यकपुत्रा सा
। पुत्रवन्मयि वत्सला ॥ ५१ ॥ तस्यामुत्कंठितोऽन्येद्यु–रुद्यानश्रेणिसंकुलं ॥ संपदा दत्तसंके-
तं । साकेतं गतवानहं ॥ ५२ ॥ तत्रापि चित्रवैचित्र्य–तोषिताखिलपत्तनः ॥ गत्वा बहिरहं

गेह-मन्यदा यावदागमं ॥ ५३ ॥ तावन्मातुः स्वसा सा मे । तारं केनापि हेतुना ॥ गाढो-
रस्तान्रमस्तोक-शोकार्त्ता तत्र रोदिति ॥ ५४ ॥ किमद्य रुद्यते मात-रेवं तारस्वरं त्वरं ॥ इ-
ति पृष्टा समाचष्टे । सास्म मह्यं कथामिमां ॥ ५५ ॥

अस्ति वत्स पुरेऽमुष्मि-न्निग्रहाऽनुग्रहक्षमः ॥ यक्षः सुरप्रियो नाम्ना । कानने कुसुमाकरे
॥ ५६ ॥ प्रतिवत्सरमेतस्य । चित्रकर्म विरच्यते ॥ तूर्यत्रिकपवित्रे च । चैत्रयात्रामहोत्सवे ॥
॥ ५७ ॥ प्रतिवर्षमसौ वर्णै-र्विचित्रैश्चेन्न चित्र्यते ॥ साकेतस्य समस्तस्य । मारिमारभते त-
दा ॥ ५८ ॥ चित्र्यते चेत्तमेवाशु । क्रूराशयतयाऽद्भुत ॥ विपाशकमिव व्याघ्रो । हंति चित्र-
करं तदा ॥ ५९ ॥ असूत्रि चित्रकैर्मृत्यु-र्भयभ्रांतैः पलायन ॥ ययुर्जृम्भन्निदो भीत्या । नू-
न्नृतः किं न तोयधिं ॥ ६० ॥ एकसंकलिकांश्चक्रे । नश्यतस्तान्नृपस्ततः ॥ अचिंतितोऽथ य-
क्षोऽप । मारिकुन्मास्मन्नूदिति ॥ ६१ ॥ साकेतपतिरेतेषां । सर्वेषां चित्रशिल्पिनां ॥ पत्रकेषु
लिखित्वाथ । नामानि कलशेऽक्षिपत् ॥ ६२ ॥ घटमध्यात्समाकृष्टे । कुमार्या नामपत्रके ॥
यस्य तन्नाम तेनायं । चित्रणीयो न संशयः ॥ ६३ ॥ चित्रकर्माथ निर्माय । चित्रकर्मा स

यक्तः ॥ कृतांतनगरातिथ्यं । लप्स्यते पारितोषिकं ॥ ६४ ॥ पुत्रो ममैकपुत्राया । विचित्रस्तव बांधवः ॥ वर्षेऽस्मिन्नामनिर्दिष्टः । स यक्षं चित्रयिष्यति ॥ ६५ ॥ स चैतच्चित्रकर्मांते । याता कीनासदासतां ॥ नाविपुत्रवियोगार्त्ता । तेनाहं वत्स रोदिमि ॥ ६६ ॥ इत्याकर्ण्य सहर्षेण । बन्नाषे स्थविरा मया ॥ रोदित्वालमुदित्वाल—मवलंबस्व निर्वृतिं ॥ ६७ ॥ अयं धिनोतु मद्बंधुः । कल्पायुः शिल्पिनां वरः ॥ मया चित्रयितव्योऽय—मप्रियोऽपि सुरप्रियः ॥६८॥ ज्ञातं च मे मनस्येत—देतैः सत्वरगत्वरैः ॥ एकस्यापि परित्राणं । प्राणैश्चेत्प्राणिनो नवेत् ॥ ॥ ६९ ॥ तदानीं मम पाथेयं । परलोकपथे नवेत् ॥ धर्मस्यातिरहस्यं हि । प्राणिरक्षां प्रचक्षते ॥ ७० ॥ ततो बाष्पनिरुद्धाक्षी । वृद्धा वाचमुपाददौ ॥ मम त्वमपि पुत्रोऽसि । वत्स वात्सल्ययोगतः ॥ ७१ ॥ निर्दाक्षिण्येन यक्षेण । त्वयि नीतेंतकांतिकं ॥ स्युर्मे पुत्र नृशं नेत्र—वारिपूरमुचः शुचः ॥ ७२ ॥

इति ब्रुवाणां तां वृद्धां । निर्बंधादहमन्यथा ॥ एष मे विषमेऽप्यस्मिन् । यतिष्ये चित्रकर्मणि ॥ ७३ ॥ उपवासत्रयस्यांते । ततः स्नानपुरस्सरं ॥ गंधोन्मदिष्णुन्निर्गात्रं । चंदनाद्यैरच-

चर्चं ॥ ७४ ॥ देहादितसितवस्त्र–पल्लवस्थगिताननः ॥ शुद्धैर्वर्णैर्नवैः कूर्चै–र्भक्त्या यक्षमचि-
त्रयं ॥ ७५ ॥ विरचय्य ततश्चित्रं । नम्रो व्यज्ञपयं च तं ॥ त्वादृक्षः क्व विज्ञो यक्षः । स्वल्प-
शिल्पी क्व मादृशः ॥ ७६ ॥ तदत्र चित्रव्यापारे–ऽपराद्ध यन्मया त्वयि ॥ तत्सम्यक् क्षम्य-
तां हंत । संतः प्रणतवत्सलाः ॥ ७७ ॥ इति विज्ञापितो यक्षः । प्रत्यक्षीभूय भूयसा ॥ मां
जगाद प्रसादेन । भक्तिग्राह्या हि देवताः ॥ ७८ ॥ अकार्षीः साहसं यच्च । यच्चेदं शौचमाच-
रः ॥ तेन ते सुष्ठु तुष्टोऽस्मि । वृणीष्व वरमीप्सितं ॥ ७९ ॥ यक्षं वाचमथाऽवोचं । पुण्यैः
पुण्यजनेश्वर ॥ यदि मह्यं प्रसन्नोऽसि । तन्मे देहीदमीहितं ॥ ८० ॥ तात साकेतलोकस्य ।
मा कृथा मृत्युवैवशं ॥ असौ निशाचराचार–स्तव नाथ न युज्यते ॥ ८१ ॥ आचचक्षे ततो
यक्षः । कथमर्थोऽयमर्थ्यते ॥ तव मृत्युपरित्यागात् । सिद्ध एव स्वतो यतः ॥ ८२ ॥ तेने-
त्युक्ते मयाऽप्येषः । स्वजातावपि दुर्लभः ॥ प्रसादविकसन्नेत्रा–द्वरस्तस्मादयाच्यत ॥८३॥ स-
पदस्याऽपदस्यापि । चेतनस्येतरस्य च ॥ वस्तुनो यस्य कस्यापि । देशमेकं विलोकये ॥८४॥
तस्याऽप्यक्षीकृतस्यैन–न्नव देव प्रसादतः ॥ तादृक्षमेव निःशेषं । लिखेयं रूपमंजसा ॥८५॥


॥ ३३ ॥

एवमस्त्विति यक्षोऽपि । प्रतिश्रुत्य तिरोदधे ॥ देवता न हि दृश्यंते । विद्युदुद्योतलील-
या ॥ ७६ ॥ एकं प्रतीकमालोक्य । रूपनिर्माणकर्मणा ॥ वरस्याऽव्यभिचारित्वं । मया स-
त्यापितं बहु ॥ ७७ ॥ ततः स्वामिव कौशांबीं । स्मृत्वा सोत्कंठमागमं ॥ चित्रे चात्र समा-
दिष्टो । विष्टपेंद्र कृतं त्वया ॥ ७८ ॥ चितरूपेऽप्यनूद्भव्या । मषीलक्ष्मेदमत्र यत् ॥ अपरा-
ध्यति तत्रासौ । केवलं देवतावरः ॥ ७९ ॥ पर्यवस्यति देवस्य । प्रत्ययश्चेन्न चेतसि ॥ जन-
स्यास्य तदा सद्यः । प्रसादोऽस्तु परीक्षया ॥ ८० ॥ इत्युक्त्वा विरते तत्र । नीतिपारीणबुद्ध-
यः ॥ युगंधरादयोऽमात्या । युगपज्जगदुस्तदा ॥ ८१ ॥ न्यायावतीर्णमाकर्ण्य । शिल्पिनोऽ-
पीदृशं वचः ॥ अनूम नूमिपालेंद्र । वयं विस्मितचेतसः ॥ ८२ ॥ आकर्णितागसो यद्वत् ।
यच्चाऽदृष्टागसः स्वयं ॥ परीक्ष्य निग्रहः कार्यः । कुप्यति स्मृतिरन्यथा ॥ ८३ ॥ परीक्षावि-
धिमेतस्य । तीव्रकोपः क्षितेः पतिः ॥ मंत्रिणामुपरोधेन । कथंचित्प्रत्यपद्यत ॥ ८४ ॥

अथ चित्रकरस्यास्य । विकस्वरतरौजसः ॥ नृपः सन्मुखकुब्जाया । वक्त्रमात्रमदर्शयत्
॥ ८५ ॥ यथा विधिरनाधिस्तां । यथासंस्थानलांछनां ॥ कुब्जामज्ञसमानास्य–स्तादृशीमेव

सोऽलिखत् ॥ ८६ ॥ दृष्ट्वास्य वरमाहात्म्यं । विस्मयस्मेरलोचनः ॥ मूर्धानं धूनयामास । निःशेषपरिषज्जन. ॥ ८७ ॥ स्वयं कृतपरीक्षोऽपि । क्षोणीपालः क्रुधं दधत् ॥ दध्रे न मधुरां छाया–मंतर्वह्निरिव द्रुमः ॥ ८८ ॥ येनाऽज्ञायत विश्वेऽपि । वंशा विश्वजराजृतां ॥ ज्वलितो मे स कोपाग्नि–र्निष्फलो मास्मभूदिति ॥ ८९ ॥ आदिदेश नरेशोऽस्य । चित्रकस्य गतत्रपः ॥ दक्षिणे क्षीणदाक्षिण्यः । पाणौ संदंशकर्त्तन ॥ १०० ॥ युग्मं ॥ तमादेशं निशम्याथ । न्यायनीरधयो जनाः ॥ नृपस्याऽन्यायमुद्वीक्ष्य । वीक्षामासुः परस्पर ॥ १ ॥ ऊचिरे च वचो नीचै–रसौ पश्यत कीदृश ॥ निर्व्यूढोऽपि परीक्षाया । लभते पारितोषिकं ॥ २ ॥ प्रावृषेण्यपयोवाहा–द्वह्निवृष्टिरियं ध्रुवं ॥ प्रसादार्हस्य भूपाला–द्यदेतस्यैव निग्रहः ॥ ३ ॥ गोचरः किं तु नास्माकं । नृपतौ कुपिते सति ॥ यदेव रोचते राजा । तदेव कुरुते यतः ॥ ४ ॥

तादृशं दुर्नयं दृष्ट्वा । लब्ध्वा प्रस्तावमात्मनः ॥ ततो युगंधरो मंत्री । वक्तुमेवं प्रचक्रमे ॥ ५ ॥ कोऽयं त्वया महीनाथ । नव्यो नीतिक्रमः कृतः ॥ अक्षुसेन नृपैः पूर्वैः । पथा संचरसे कथं ॥ ६ ॥ कोपेन पवनेनेव । दीपितो दुर्नयानलः ॥ प्रजा भूमीभृतामाशु । वंश-

दाहाय जायते ॥ ७ ॥ प्राकृतोऽप्यवमंतव्यो । न बुधेन शुभ्रेच्छुना ॥ खेदितः कृकलासोऽपि
। विषं वर्षति रोषतः ॥ ८ ॥ दत्ते महांतमातंकं । सामान्योऽप्यवमानितः ॥ भुजंगो गूढमा-
गत्य । दशत्येव खलीकृतः ॥ ९ ॥ तदेष देवतादत्त—वरः सन्मानमर्हति ॥ यंत्रितश्च प्रसादे-
न । राज्यं ते भूषयिष्यति ॥१०॥ लोकंपृगुणिनो ह्यस्य । विहिता त्वपमानता ॥ दंदशूकमि-
वामर्षं । बलाज्जागरयिष्यति ॥ ११ ॥ व्यंगोऽपि पुरुषोऽमर्षा—त्समये दुःखदो भवेत् ॥ शिरः-
शेषोऽपि किं राहु—श्चंद्रसूर्यौ न बाधते ॥ १२ ॥ अपहंत्यवमंतारं । सामर्षः पुरुषो यथा ॥ क-
थयामि तथा देव । दृष्टांतमवधारय ॥ १३ ॥

अस्ति प्रत्यापणन्यस्त—रत्नं रत्नपुरं पुरं ॥ शरयूर्यस्य पर्यंक—प्रसृता परिखायते ॥१४॥
विक्रमी क्रमिकस्त्यागी । नृपोऽस्ति नरविक्रमः ॥ वनमेवाऽवनं जज्ञे । यद्भय वैरिभूभृतां ॥
॥ १५ ॥ अस्ति तत्रैव वास्तव्यो । वास्तवस्तवनीयधीः ॥ आयुर्वेदधनुर्वेद—मल्लविद्यादिकोवि-
दः ॥ १६ ॥ ख्यातः क्षितिप पर्यंत—मपर्यंतगुणैकभूः ॥ मृगांकाख्यः कलामूलं । मूलदेवोप-
मः पुमान् ॥ १७ ॥ अथास्ति शरयूतीरे । रम्यभूमिः खलूरिका ॥ तत्रागत्य प्रतिप्रातः ।

करोतिस्म नृपःश्रमं ॥ १८ ॥ तत्रैक्षि क्षितिभृद्योग्यं । योग्यसुब्रह्मचारिणः ॥ वलं बाह्वोर्मृ-
गांकस्य । बहुधा वसुधाभुजा ॥ १९ ॥ पश्यन्नोजायित तस्य । विश्वस्यापि विजित्वरं ॥ तुच्छ-
प्रकृतिः सुप्रापान् । स विकल्पान् व्यकल्पयत् ॥ २० ॥ यद्ययं मम साम्राज्य–माक्रामति
पराक्रमैः ॥ कस्तदा प्रतिबध्नीया–द्वीरज्जोज्या हि भूरियं ॥ २१ ॥ द्विराज्यबीजभूतत्वा–द्वि-
पक्षस्तदयं मम ॥ एकश्यान्निलापित्व—माद्यं वैरस्य कारणं ॥ २२ ॥ आमयश्च विपक्षश्च ।
नोपेक्षामर्हतः खलु ॥ नखछेद्यावपि स्यातां । कुरुच्छेदाविमौ क्रमात् ॥ २३ ॥ तदेष मे निमे-
पार्द्ध–त्प्राप्यः प्रेतपतेः पुरीं ॥ विकल्प्येति नृपः पत्तीन् । रहस्तं हंतुमादिशत् ॥ २४ ॥ त-
तो गच्छन्निजं गेह–मास्थाय स्थानमेकतः ॥ मृगैरिव मृगारातिः । स रुद्धस्तैः पदातिभिः ॥
॥ २५ ॥ वक्तश्चाहो गृहाणास्त्रं । क्रुद्धस्ते नरविक्रमः ॥ इत्याक्षिप्तोऽपि स क्षोभं । ययौ न हि
मनागपि ॥ २६ ॥ सोऽथ पार्थ इवैकोऽपि । कोपात्तः प्रतिपूरुषं ॥ वर्षैस्तेषां शरासार–मा-
दिशत्कांदिशीकतां ॥ २७ ॥ घातयत्यनघाचार–मपि मां नृपपांशनः ॥ इत्यमर्षं वहन्नेष–प्र-
तस्थे दिशमुत्तरां ॥ २८ ॥

॥ ३७ ॥

॥ ३८ ॥

अरण्यानीमतिक्रम्य । वनराजिविराजितं ॥ माणिक्यमयमेकत्र । पश्यतिस्म स पर्वतं
॥ २९ ॥ तस्य चूडाग्रमारूढां । प्रौढशोकविसंस्थुलां ॥ रुदतीं कांचिदत्युच्चै-र्वृद्धां स स्त्रियमै-
क्षत ॥ ३० ॥ स समीपमुपागत्य । तामलपत्कृपेरितः ॥ तारतारं कथंकारं । रुद्यते मातरा-
तुरं ॥ ३१ ॥ साऽवादीद्वत्स धत्से त्वं । तनूजवतुलां मम ॥ कृपालुहृदयश्चासि । तत्ते दुःखं
निवेद्यते ॥ ३२ ॥ अयत्ननिर्मले रत्ने-राढ्ये वैताढ्यपर्वते ॥ अस्ति सुराज्यसानंदं । नगरं म-
णिनूपुरं ॥ ३३ ॥ तत्रासीत्त्रासिताराति-र्नृपतिर्मणिशेखरः ॥ धृता विद्याधरैराज्ञा । यस्य शे-
षेव मौलिषु ॥ ३४ ॥ सतीषु प्राप्तरेखास्ति । पत्रलेखेति तत्प्रिया ॥ जदित्वरयशश्चंद्र-श्चंद्रचू-
डस्तयोः सुतः ॥ ३५ ॥ नृपोऽथ प्राप पंचत्व-मायुषि क्षयमीयुषि ॥ चंद्रचूडस्ततस्तस्य । रा-
ज्येऽस्थापि च मंत्रिभिः ॥ ३६ ॥ तदानीं च स बालत्वा-न्न विद्यासाधनक्रमः ॥ विद्यासि-
द्धेरभावाच्च । प्रभविष्णुर्न शत्रुषु ॥ ३७ ॥ विज्ञाय लीलयाऽनल्पं । बालराज्यमरातिभिः ॥
चंद्रचूडः समाक्रम्य । गमितः प्राणसंशयं ॥ ३८ ॥

मृत्योरंतिकमायातः । स मात्रा पत्रलेखया ॥ समुत्पाट्य झटित्येव । समानीतोऽत्र प-

र्वते ॥ ३९ ॥ गिरावत्र स्फुरद्रत्ने । रत्नप्रस्थान्निधे स्थितः ॥ विद्यासाधनमारेन्ने । स निस्तंद्रो
जितेंद्रियः ॥ ४० ॥ तस्य साधयतो विद्या–मनवद्यकृपाजुषः ॥ अतिचक्राम षएमासी । दि-
नमेक तु शिष्यते ॥ ४१ ॥ अद्य कृपायां प्रत्यक्ता । प्रज्ञप्तिः परमेश्वरी ॥ हृढाऽत्वर्षन्नतुष्टा-
स्मै । साम्राज्यमुपदास्यति ॥ ४२ ॥ इतः प्रत्यर्थिनो ज्ञात्वा । विद्यासिद्धिं समत्सराः ॥ अ-
द्योपेत्य समीहंते । प्रत्यूहं कर्त्तुमंजसा ॥ ४३ ॥ सवित्री पत्रलेखास्य । परमुत्तरसाधिका ॥
मुहुस्ताम्यति किंचैषा । योषिदेका करोतु किं ॥ ४४ ॥ तदेषा पुरुषं कंचि–त्प्रत्याशं प्रत्यवे-
क्षते ॥ स्वसूनोरसहायस्य । यः साहाय्यकरो ज्ञवेत् ॥ ४५ ॥ वत्स साऽहं न पश्यामि । न-
रं पुत्रोपकारिणं ॥ अत्यहितं च पश्यामि । स्वसूनोस्तेन रोदिमि ॥ ४६ ॥ इदानीं तु मुदं
नीता । हृष्टेन सदय त्वया ॥ स त्वं हि मम पुत्रस्य । परित्राद्य ज्ञविष्यसि ॥ ४७ ॥ ज्रदा-
राग्रेह्यपार्थाः स्यु–रर्थिनां न मनोरथाः ॥ पूर्णे चंद्रे चकोराणां । पारणे किमु संशयः ॥४८॥

इत्युक्त्वा विरतैषा तां । मृगांकः प्रत्यवोचत ॥ विद्यासिद्धौ तदेकाग्रः । क्व मातर्मे स
बांधवः ॥ ४९ ॥ अध्यासीनो लतामध्यं । तदेकध्यानमानसः ॥ चंद्रचूडो मृगांकस्य । तया

संदर्शितस्ततः ॥ ५० ॥ हेमाद्रिमिव निस्तंद्रः । परितस्तल्लतागृहं ॥ मृगांक इव निःशंको ।
मृगांकः स्वैरमभ्रत् ॥ ५१ ॥ तदा मृगांकमालोक्य । शत्रवस्तेऽपि तत्रसुः ॥ हरेरालोकने हं-
त । स्फुरेयुः किमु फेरवः ॥ ५२ ॥ प्रज्ञप्त्या दत्तमासाद्य । राज्यमुर्जस्वलं निशि ॥ चंद्र-
चूडः प्रगे मातु–रेत्य पादाववंदत ॥ ५३ ॥ पत्रलेखा तमाशीभि–रभिनंद्याददे वचः ॥ व-
त्सांतरायहंतायं । वास्तवस्तव बांधवः ॥ ५४ ॥ ततो ज्ञातप्रबंधेन । बंधुवत्प्रीतिबंधुरः ॥
आलिंग्य चंद्रचूडेन । मृगांकः समभाष्यत ॥ ५५ ॥ भ्रातरस्योपकारस्य । मागां प्रत्युपका-
रितां ॥ ममेव हि तवापीदृक् । व्यसनं जातु मास्मभूत् ॥ ५६ ॥ सहायकपणक्रीतं । रा-
ज्यमेतत्तवैव मे ॥ अमी चापि मम प्राणा–स्तवैवायतवृत्तयः ॥ ५७ ॥ कृपाणं तु गृहाणैन–
मस्माकं स्मृतिहेतवे ॥ ध्रुवं पाणिस्थितेऽमुष्मिन् । जिष्णुनापि न जेष्यसे ॥ ५८ ॥ चंद्रचू-
डप्रदत्तासे–रुपानिन्येंगुलीयकां ॥ पत्रलेखा मृगांकस्य । तद्भक्तिं चैवमादिशत् ॥ ५९ ॥ अस्मि-
न् सन्निहिते वत्स । दिव्यातिशयशालिनि ॥ स्थावरं जंगमं चापि । न जातु प्रभवेद्विषं ॥
॥ ६० ॥ एषाऽवस्वापिनी विद्या । पाठसिद्धा च गृह्यतां ॥ करे वैरिजयो यस्यां । न च प्रा-

णिवधः क्वचित् ॥ ६१ ॥ तत्तयोरुपरोधेन । मृगांकः सर्वमाददौ ॥ किं किं नाम न कुर्वंति
। सतः प्रार्थनया सतां ॥ ६२ ॥

तदा तदीय सत्कारं । न्यक्कारं च पुरातनं ॥ परामृशन्मृगांकोऽभू—दास्पदं हर्षशोकयोः
॥ ६३ ॥ पत्रलेखा समालोक्य । सकीर्णरससंकुलं ॥ आकारेंगितनिष्णाता । प्राह वाढौ वि-
धृत्य त ॥ ६४ ॥ उन्मीलत्प्रमदालोक—कल्लोलमपि लक्ष्यते ॥ किंचित्तमिस्रव्यामिश्रं । प्रभा-
त इव ते मुख ॥ ६५ ॥ वत्साभिधत्स्व तत्सत्यं । किं नु दुःखं करोति ते ॥ मयि मातरि ते
नून—मनावेद्यं न विद्यते ॥ ६६ ॥ ततस्तयोर्मृगांकस्तां । पूर्वामकथयत्कथां ॥ दुःखकारणमू-
चे च । मन्युपर्यश्रुलोचनः ॥ ६७ ॥ न दुनोति किमप्यंतः । स नृपवपराभवः ॥ क्षोणीप-
तिः क्षणान्मित्र—ममित्रं वा क्षणाद्भवेत् ॥ ६८ ॥ प्राणानादाय नष्टेन । दुष्टेन पितरौ मया ॥
तत्रैव यत्पुनस्त्यक्तौ । तदेव व्यथते मम ॥ ६९ ॥ एतयोस्तान्यनिष्टानि विकल्पैः स्नेहढौ-
कितैः ॥ नृपोपज्ञानि संकल्पाद् । दूये मातर्निरंतरं ॥ ७० ॥ किंवदंतीमहं पित्रो—र्जानेयं यदि
सम्प्रति ॥ तदा तदुचितं किंचि—दनुवर्त्ते प्रवर्त्तन ॥ ७१ ॥ चंद्रचूडस्ततो ध्यान । धृत्वाऽवक् सु-

समाधिना ॥ प्रज्ञप्त्याऽवधिना ज्ञात्वा। सर्वमावेदितं मम ॥ ७२ ॥ परं तत्कंठनाड्यंत—रन्न्य-
स्यति गतागतं ॥ मूकस्येव न मे जिह्वा । प्रह्वी न्नवति जल्पितुं ॥ ७३ ॥ तथापि धैर्यमालं-
ब्य । कथ्यते शृणु बांधव ॥ तदा निहतपत्तिस्त्व—मुत्तराशामशिश्रयः ॥ ७४ ॥ नृपेण त्वद-
संप्राप्ति—प्रकामज्वलितक्रुधा ॥ कटमर्द्दः कुटुंबस्य । कारितस्तव निर्दयं ॥ ७५ ॥

तदाकर्ण्य मृगांकेन । शोकाश्रुजलकुल्यया ॥ सेचं सेचं परां वृद्धिं । लंन्नितः क्रोधपाद-
पः ॥ ७६ ॥ नोत्पाटयामि चेदेनं । वर्षांतर्नरविक्रमं ॥ तदा वह्नौ विशामीति । स प्रतिज्ञां
विनिर्ममे ॥ ७७ ॥ चंद्रचूडमथापृछ्य । पत्रलेखां प्रणम्य च ॥ रत्नप्रस्थात्प्रतस्थेऽसौ । प्रति-
पत्तिसमुत्सुकः ॥ ७८ ॥ विद्याप्रसादमाहात्म्या—ज्जितारिर्मणिनूपुरे ॥ चंद्रचूडोऽपि चिक्रीड । 
स्वछंदः सपरिच्छदः ॥ ७९ ॥ मृगांकः कामसंपूर्ति—सज्जामुज्जयिनीं ययौ ॥ सिप्रासमीरणो य-
स्या—माचामति रतिक्लमं ॥ ८० ॥ तस्यां विलासिनीवक्त्र—ज्योत्स्नाछिन्नतमःक्रमः ॥ दिना-
न्युद्दामपंचेषुः । पंचबाणोऽत्यवाहयत् ॥ ८१ ॥ बाल्ययौवनयोः सोऽत्र । मध्ये वयसि तस्थु-
षीं ॥ कांचिन्नूरिपरीवारां । बालामालोकयत्पथि ॥८२॥ मृगांकस्य मनस्यासी—त्तां प्रेक्ष्य मृ-

॥ ४२ ॥

गचक्षुषां ॥ इयं नेत्रसुधावृष्टि–र्नवा सृष्टिर्ध्रुवं विधेः ॥ ७३ ॥ लीलालोकनमात्रेण । बलादा-
च्छिद्य मे मनः ॥ निन्येऽथ तदियं वाध्ये–ऽप्यवश्यंपश्यतोहरा ॥ ७४ ॥

एवं चिंतयतस्तस्य । सा दृशोः पथमत्यगात् ॥ तदेकाग्रमनोवृत्तिः । स यावत्तत्र ति-
ष्ठति ॥ ७५ ॥ तावत्क्षणांतरे जात–क्रोशामैक्षत विस्मितः ॥ अतुच्छोच्छलदाक्रंद–सज्जामुज्ज-
यिनीं पुरीं ॥ ७६ ॥ काश्चिद्रुदंत्यः पुत्कारै–र्यांति राजकुले स्त्रियः ॥ क सा वत्सेति जल्पं-
त्यः । साश्रं निर्यांति काश्चन ॥ ७७ ॥ वाष्पताम्यत्पुटे नेत्रे । दधद् धात्रीधवोऽपि च ॥ लो-
केनाऽस्तोकशोकेन । संयुक्तो निर्ययौ बहिः ॥ ७८ ॥ विरंगस्फारनीरंगी–पिहिताननपंकजाः
॥ रुदंत्योऽत्यंतशोकार्त्ता । यांति शुद्धांतयोषितः ॥ ७९ ॥ एकातपत्रं तत्रेदं । शोकराज्यं वि-
लोक्य सः ॥ समपृच्छत गच्छंती–मेकां पंकजलोचनां ॥ ८० ॥ तांऽइ किमेतदुच्चिद्र–मवंत्यां
शोकवैवश ॥ अनल्पदुःखं साऽजल्प–न्महाभाग निशम्यतां ॥८१॥ अत्रास्ति त्रिदिवाधीश–
विंव विक्रमनृपतिः ॥ तस्याऽवदातसौंदर्या । सुता कनकसुंदरी ॥८२॥ साद्याऽप्राप्तवरा बाला
। कानने कुसुमाकरे ॥ देवस्य मदनस्याद्य । नमस्यायै प्रगेऽगमत् ॥ ८३ ॥ सा मनोज्ञव-

मन्यर्घ्यं । भक्त्या व्यज्ञपयत्पुरः ॥ त्रिजगज्जनितानंदं । देव त्वामिदमर्थये ॥ ९४ ॥ योऽद्य
राज्यपथे दृष्ट–स्तव मूर्त्यंतरं मया ॥ अवमान्य वरानन्यान् । वरं देहि तमेव मे ॥ ९५ ॥
इत्थं प्रार्थ्य रतेर्नाथं । सद्यस्तद्विरहातुरा ॥ विहरंती वनस्यांत–र्दष्टा दुष्टाहिना द्रुतं ॥
॥ ९६ ॥ अद्य दृष्टः स एवास्तु । वरो जन्मांतरेऽपि मे ॥ कुर्वंती सैवमाशंसां । व्यानशे वि-
षमूर्छया ॥ ९७ ॥ वार्त्तामाकर्ण्य शोकार्त्तः । क्षोणीपतिरुपेयिवान् ॥ आललाप प्रियोल्लापैः ।
सा दत्ते नोत्तरं पुनः ॥ ९८ ॥ अंतःपुरपुरंध्रीभि–र्बाधते पुत्रि किं तव ॥ इत्युच्चैर्व्याहरंतीभिः
। सा भृशं स्नपिताश्रुभिः ॥ ९९ ॥ यशोलाभार्थिभिस्तैस्तैः । प्रचंडैराहितुंडिकैः ॥ सर्वात्म-
नापि विक्रांतं । मंत्रतंत्रप्रयोगतः ॥ १०० ॥ भद्र भद्रमयी तस्या । ही कथापि न प्रत्युत ॥
अधुना ह्युग्रमूर्छा सा । मूर्छतिस्म मुहुर्मुहुः ॥ १ ॥ निराशीभूय मुक्तायां । मांत्रिकैरथ तां-
त्रिकैः ॥ सुतायामवनीपालः । प्राप धैर्यविपर्ययं ॥ २ ॥ नूनमस्यां विपन्नायां । देवोऽप्येष
विपत्स्यते ॥ इति राज्यक्षयं दृष्ट्वा । क्ष्मापो व्यज्ञपि मंत्रिभिः ॥ ३ ॥ विषार्त्तिनिग्रहिणोऽस्या
। वसुधार्धं महर्द्धिकं ॥ कन्यां चैकां पणीकृत्य । वाद्यतां देव डिंडिमः ॥ ४ ॥ तत्तथेति प्रति-

श्रुत्य । दत्वा शिक्षां क्षमाभुजा ॥ एतदर्थमहं नद । प्रहितारक्षसंनिधौ ॥ ५ ॥ एनमर्थं स-
मर्थ्याथ । प्रस्थितास्मि गतागतं ॥ संविन्नागी महान्नाग । दुःखस्यासि मया कृतः ॥ ६ ॥
इति श्रुते मनश्चौरी । सा मे किं न न्नवेदियं ॥ इत्थं मृगांकः साशंकः । काममंतरदह्यत ॥
॥ ७ ॥ कृतापकारमाशंक्य । स एवं दैवमात्मनि ॥ विपविच्छेदं सोत्साह—मंगुलीयकमैक्षत ॥
॥ ८ ॥ तस्यैवं सविकल्पस्य । झिंडिमः सोऽप्युपाययौ ॥ तेनोच्चाय निषिद्धश्च । सर्वेषामेव
पश्यतां ॥ ९ ॥ ततो वाहनमारोप्य । क्षणेनैव विचक्षणः ॥ स राजपुरुषैः प्रीतैः । कन्यां-
तिकमनीयत ॥ १० ॥ नव्यनागलतापर्ण—सवर्णदर्शनद्युतिं ॥ विषोर्मिग्रस्तचैतन्या—मसामा-
न्यवपुःश्रियं ॥ ११ ॥ समालोक्य मृगांकस्तां । मृगांकवदनां तदा ॥ अन्निज्ञः प्रत्यन्निज्ञाय ।
सजज्ञे साश्रुलोचनः ॥ १२ ॥ युग्मं ॥ वैरायमाणो दैवेन । दृढावस्कंददायिना ॥ सोऽविक्षे-
पान्निचिक्षेप । स्वांगुलीयं तदंगुलौ ॥ १३ ॥ तदैवोन्मीलयामास । सा नेत्रे चलपक्ष्मणी ॥
मुख विकासयामास । लोकश्चाश्चर्यसंकुलः ॥ १४ ॥ विषे प्रागेव नष्टेऽपि । तदंगस्पर्शलालसः
॥ विषरक्षापदेशेन । तां पस्पर्श स पाणिना ॥ १५ ॥ स्मेरिताक्षी ततो वाला । तां निरीक्ष्यो-

पलक्य च ॥ स्तंभितांगी सरोमांचा । चित्तस्यांतरचिंतयत् ॥ १६ ॥ दिष्टया दृष्टिपथं यातः
। पूर्वदृष्टो मम प्रियः ॥ अभीष्टवरदानेन । तुष्टो मे भगवान् स्मरः ॥ १७ ॥ प्रियस्यास्य क-
रस्पर्शो । यद्यप्यानंदयत्ययं ॥ तथापि मम कौमार-मर्गला स्मरशर्मणां ॥ १८ ॥

एवं विचिंत्य संवर्त्य । यत्तच्चासो विसंस्थुलं ॥ दृशौ व्यावर्त्तयामास । मृगांकात्कथम-
प्यसौ ॥ १९ ॥ शनैरुत्थाय शय्याया-मुपविश्य विशांपतिं ॥ शुद्धांतलोकमन्यं च । सा वीक्ष्योवाच
मालतीं ॥ २० ॥ कथं सखि सखेदोऽसौ । तातप्रभृतिको जनः ॥ यद्दशानां च दृश्यंते । ने-
त्रयोरश्रुणः कणाः ॥ २१ ॥ तदोत्कंपितसर्वांगा-दर्वाग्भुजगदंशतः ॥ जन्मांतरादिवायाता ।
स्मरामि न हि किंचन ॥ २२ ॥ मालती तां ततोऽजल्प-त्त्वं से विस्मरसि कथं ॥ वलाद्गरल-
कल्लोलै-र्यत्कृतासि विचेतना ॥ २३ ॥ विषवैद्यैरसाध्येति । त्यक्तायां त्वयि दूरतः ॥ तदा देवः
शुचं काम-मगच्छच्च परिच्छदः ॥ २४ ॥ यदा मृत्युदशाभ्यर्ण-मवतीर्णासि वर्णिनि ॥ तवा-
नुयानसंबद्ध-स्तदा देवोऽप्यजायत ॥ २५ ॥ प्रहितां पटहस्यार्थे । पृष्ट्वा मां पथि सादरं ॥
विदांचकार वृत्तांत-मेनं सैष महाशयः ॥ २६ ॥ अनेन स्वजनेनेव । श्रुत्वैतद्दुर्मनायितं ॥ त-

॥ ४६ ॥

देव च समागत्य । जनोऽयं सुमनीकृतः ॥ २७ ॥ पश्यैतस्यां गुणैः पूत—मंगुलीयं निजांगुलौ ॥ तदनेन जनस्यास्यो—पकृतं प्राणरक्षया ॥ २८ ॥

श्रुत्वेमा मालतीवाच—मंगुलीयं विलोक्य च ॥ दत्वा च हृदयोत्संगे । दध्यौ कनकसुंदरी ॥२९॥ अंगुलीयं समालिंग्य। मां प्रियांगुलिपावनं॥ विषविध्वंसकं चाब्रूत् । तन्मे द्वेधापि वल्लभं ॥ ३० ॥ स्निग्धमालोकनं पूर्वं । सत्यंकारो मयार्पितः ॥ प्राणदानपणेनैवं । क्रीताऽनेनाधुना त्वहं ॥ ३१ ॥ उपकार्यस्ति निःशूकं। दंदशूको दशन्नपि ॥ असौ संयोजितो येन । कृतलोकप्रियप्रियः ॥ ३२ ॥ प्रेयसोऽस्माद्भविष्यंति । पाणिपीडनपूर्वकाः ॥ कदा मेऽनंगरंगीलिः । स्वैरमाश्लेषसंपदः ॥ ३३ ॥ इति चिंतापरामेना—मवादीन्मेदिनीपतिः ॥ तव प्राणप्रदो वत्से । कोऽप्येषः पुरुषो महान् ॥ ३४ ॥ तदनेन समं पुत्रि । विशामः सांप्रतं पुरीं ॥ इत्युक्त्वा तां स पंथान—मुत्पताकमकारयत् ॥ ३५ ॥ मृगांकं स पुरस्कृत्य । महोत्सवपुरस्सरं ॥ सुतामुत्संगमारोप्य । प्रसन्नः प्राविशत्पुरीं ॥ ३६ ॥ उपेयुषा निजं सौधं । राज्ञा सत्कारपूर्वकं ॥ मृगांको हरिणांकश्री—र्निर्विकल्पमजल्प्यत ॥ ३७ ॥ जीवितं त्वं वितीर्यास्यै ।

ध्रुवं साम्राज्यमर्हसि ॥ राज्यस्यार्धं ततस्तुभ्यं । वितरंतस्त्रपामहे ॥ ३८ ॥ इति सप्रीति सं-
भाष्य । मृगांकाय क्षितीश्वरः ॥ आत्मतुल्यामतुल्यश्री–प्रभुत्वपदवीं ददौ ॥ ३९ ॥ तां तु
राजसुताबाह्या–मलावण्यमिव श्रियां ॥ प्राप्यापि पूर्णसर्वांगीं । न स्वैरं विलसत्यसौ ॥४०॥
न चेयं तद्वियोगार्त्ता । रतिं सर्वत्र शालिनि ॥ वनेऽपि लभते किं तु । हंत संतप्यतेऽधिकं ॥४१॥
मालती प्राह संततां । ततो राजसुतामपि ॥ इत्थं शीतोपचारेऽपि । सखि संतप्यसे क-
थं ॥ ४२ ॥ यच्चंदनेंदुकर्पूर–हारास्तामरसानि च ॥ मृणालान्यपि नालं ते । दृढांतस्तापशां-
तये ॥ ४३ ॥ सखि यद्यपि नाख्यासि । त्रपया तापकारणं ॥ तथापि सर्वं जानामि । मन ए-
वास्मि यत्तव ॥ ४४ ॥ अथ राजसुता प्राह । सखि यद्वेत्सि तत्तथा ॥ अस्त्यद्य चिंता तातस्तु ।
न जाने किं करिष्यति ॥ ४५ ॥ वरांतरस्य संकल्प–स्तातचेतसि चेद्भवेत् ॥ तदा मे सखि मन्ये-
थाः । संतापस्यापि चूलिकां ॥ ४६ ॥ अवदन्मालती देवि । विकल्पैः किमु खिद्यसे ॥ यत्तदैतस्य
देवेन । ह्यर्पितासि पणीकृता ॥ ४७ ॥ ऊचेऽथ कंचुकी राज्ञ–स्तदैवोपेत्य मालतीं ॥ कल्याणि
त्वामवंतीशः । समादिशति सादरं ॥ ४८ ॥ वत्साऽस्मान्निर्मृगांकाय । वितीर्णेत्यवगम्यतां ॥

केवलं दिवसाऽन्नावा–द्विलंबोऽनूत्कियानपि ॥ ४९ ॥ प्रातस्तु निस्तुषे लग्ने । विवाहस्ते भ-
विष्यति ॥ तदेषा निखिलोत्साह–मंगलान्यनुभाव्यतां ॥ ५० ॥ इत्यादिश्य गते तस्मिन् । दे-
वीभिः कृतमंगला ॥ प्रतीक्षतेस्म सा लग्नं राजपुत्री कथंचन ॥ ५१ ॥ निष्प्रत्यूहं तयोर्वृत्ते ।
पाणिग्रहमहोत्सवे ॥ वरेण्यवरलाभेन । मुमुदे मेदिनीश्वरः ॥ ५२ ॥ भूमृगांको मृगांकाय ।
पाणिमोचनपर्वणि ॥ श्रियं विश्राणयामास । हेमहस्त्यश्वशालिनीं ॥ ५३ ॥ इच्छानुरूपसंप-
न्न–भोगनिर्मग्नचेतसोः ॥ जगामानंदजंघाल–स्तयोः कालः कियानपि ॥ ५४ ॥ ये नमंतिस्म
सामंता । जातु नोज्जयिनीपतेः ॥ हेलया साधयामास । तानाक्रम्य स विक्रमैः ॥ ५५ ॥ मं-
डलस्थे बुधे तस्मिन् । राज्ञोऽरातिर्न कश्चन ॥ पराभवमलंभूष्णुः । कर्तुं राहुरिवाऽभवत् ॥
॥ ५६ ॥ आवर्जितमनोवृत्ति–र्नयेन विनयेन च ॥ अपुत्रः पुत्रवन्मेने । मृगांकं मालवेश्वरः
॥ ५७ ॥ अरीन् वृंहीयसो हत्वा–ऽप्यहत्वा नरविक्रमं ॥ सोऽकिंचित्करमात्मानं । पशुमेव
ह्यजीगणत् ॥ ५८ ॥ सविवेकमनुत्सेकं । छेकं स्वच्छमनोयुतं ॥ सत्यवंतमवंतीश–स्तं जगाद
कदाचन ॥ ५९ ॥ अवंतीपतयः सर्वे । पूर्वं पलितदर्शनात् ॥ अध्यवात्सुर्वनं वत्स । राज्यं

संत्यज्य लीलया ॥ ६० ॥ राज्यधुर्यमनासाद्य । मया वत्स विलंबितं ॥ अधुना तु त्वयि धुर्ये । कथमस्मि प्रमद्वरः ॥ ६१ ॥

इदानीं तदिमाः संतु । राजन्वत्यस्त्वया प्रजाः ॥ प्रजापालनसंभूतै–र्यशोभिः सुरस्त्रीन्नव ॥६२॥ त्वत्पादपरिचर्या हि । राज्यादप्यधिका मम ॥ सुप्रापमेव साम्राज्यं । गुरूपास्तिस्तु दुर्लभा ॥ ६३ ॥ ततो विज्ञपयामास । स राजानं कृतांजलिः ॥ राज्यमद्यपेतरान् कल्पान् । देव एव करोत्विदं ॥ ६४ ॥ ततो राजा करे धृत्वा । दत्वा तस्मै निजं पदं ॥ नृपाददे तदेकाग्रो । मुनीनां पदमात्मना ॥ ६५ ॥ तथा तां पालयामास । प्रजां नव्यः प्रजापतिः ॥ उर्वीपतीनां पूर्वेषां । यथासौ जातु नास्मरत् ॥ ६६ ॥ गुणिना तेन निन्याते । न्यायधर्मौ समुन्नतिं ॥ ताभ्यां तदात्मजा कीर्त्तिः । परां वृद्धिमनीयत ॥ ६७ ॥ ततः पितृवधामर्षः । समयज्ञ इव द्रुतं ॥ अमुमुत्साहयामास । निहंतुं नरविक्रमं ॥ ६८ ॥ सोऽथ दूतसमाहूत–सामंतपरिवारितः ॥ चचाल प्रबलैः सैन्यै–रवनिं कंपयन्निव ॥ ६९ ॥ भुवं च्छत्रमयीं कुर्वन् । कुर्वन् कुंतमयीं दिवं ॥ पल्लीपतिर्विराधाख्य–स्तस्करोऽस्ति पथि क्वचित् ॥ ७० ॥ नरविक्र-

मभित्रेण । रुद्धस्तेन स नृपतिः ॥ मृगारिरिव निःशंक–श्चिंतयामास चेतसि ॥ ७१ ॥
अन्योऽन्यं सैन्ययोः कृत्वा । कुंताकुंति शराशरि ॥ प्रथयिष्यामि यद्येनं । कृतांतनगरा-
तिथिं ॥ ७२ ॥ तदानीं मृत्युरेतस्य । मम चानीकसंक्षयः ॥ विमृश्येत्यस्य सेनायां । नृपोऽ-
वस्वापिनीं ददौ ॥ ७३ ॥ निद्रया निर्बलामेव । विधाय ध्वजिनीं रिपोः ॥ आदाय च श्रियं
तस्य । मृगांकः प्रययौ पुरः ॥ ७४ ॥ मृगांकक्षितिपस्याथ । श्रुत्वैतदभिषेणनं ॥ आजगाम
स्वसीमांतं । समुखो नरविक्रमः ॥ ७५ ॥ ससौष्ठवमधिष्ठाय । तत्र क्षेत्रं रणक्षमं ॥ युयु-
धाते पताकिन्या–वन्योऽन्यं नृपयोस्तयोः ॥ ७६ ॥ मृगांकमतुलानीक–मवलोक्यातिदारुणं ॥
स्व चापराधं स्मृत्वाऽनू–द्विह्वलो नरविक्रमः ॥ ७७ ॥ मृगांकक्षितिपालस्य । निरीक्ष्य न-
रविक्रमं ॥ रोमांचितस्य सन्नाह–संधयः शतधा ययुः ॥ ७८ ॥ ततो मृगांकः साक्षेप–मुवा-
च नरविक्रमं ॥ यन्मे निरापराधस्य । दुर्बुद्धे वधमादिशः ॥ ७९ ॥ मम यच्च कुटुंबस्य । क-
टमर्दमचीकरः ॥ उपस्थितमिदं पश्य । तस्य ते कर्मणः फलं ॥ ८० ॥ गृहाण शस्त्रमस्त्रं वा
। प्रहर प्रथम मयि ॥ पूर्वप्रहारदेवाको । न हि वाञ्छोर्ममाहवे ॥ ८१ ॥

इत्युक्ते दर्शयामास । विक्रमं नरविक्रमः ॥ संक्षिप्तमप्यधिक्षिप्तं । क्षात्रं तेजो हि दीप्य-
ते ॥ ७२ ॥ तस्य पर्युल्लसद्बाण-श्रेणिभिः समरांगणे ॥ जयश्रीविषये शंका । मृगांकस्या-
ऽप्यजायत ॥ ७३ ॥ बलं तस्य बलोग्रं सं-विलोक्याकुलमानसः ॥ अथ विद्याधराल्लब्धं । क-
रेणासिमशिश्रियत् ॥ ७४ ॥ तं विकोशमसिं दृष्ट्वा । नष्टं प्रत्यर्थिसैनिकैः ॥ उन्मीलितत्रयः
कांत्या । तत्यजे नरविक्रमः ॥ ७५ ॥ नरविक्रममूर्द्धान-मेतेन तरवारिणा ॥ चिच्छेद कमलच्छे-
दं । मृगांकः क्षितिवासवः ॥ ७६ ॥ उचितं दंडमाधाय । शीर्षं छित्वाऽपराधिनः ॥ अंगीचका-
र सप्तांगी-मसौ सप्ताश्वसन्निभः ॥ ७७ ॥

स्वभुजार्जितमित्यस्मिन् । पुरे रत्नपुरे स्थितः ॥ अवंतीमवतिस्मैष । किमशक्यं हि
दोष्मतां ॥ ७८ ॥ स धर्ममेव सत्कुर्वन् । राज्यलाभोपकारिणं ॥ कृतज्ञ इव सर्वत्र । पप्रथे
पृथ्वीतले ॥ ७९ ॥ कृत्वा न्यायमुपाध्याय-मयोध्यायां पुरि स्थितः ॥ सोऽध्यैत रामचरितं
। कलत्रहरणाहते ॥ ८० ॥ तदेवं देव निर्मंतु-महापुरुषनिग्रहे ॥ तथ्यं निवेदयांचक्रे । मयो-
दाहरणं तव ॥ ८१ ॥ ततश्चित्रकरोऽप्येष । निर्मंतुनिपुणस्त्वया ॥ अनुग्राह्यो न निग्राह्यः ।

स्वयमीश विमृश्यतां ॥ ८१ ॥ देवा यस्मै प्रसीदंति । स्यादवश्यं स सात्विकः ॥ कुरुते स-त्यवानिष्टं । सर्वं सत्वे प्रतिष्ठितं ॥ ८३ ॥ इत्थं यौगंधरोपज्ञा-मवजज्ञे सरस्वतीं ॥ पथ्यामपि शतानीकः । प्रज्ञवो हि हितद्विषः ॥ ८४ ॥ सदंशं च ततस्तस्य । चित्रकर्त्तुरकर्त्तयत् ॥ सतामपि विपर्यास-मादत्ते ज्ञवितव्यता ॥ ८५ ॥ तस्य कृत्वेति सदंशं । देशत्यागं विशांपतिः ॥ कृताक्षेपः समादिक्षत् । कोपस्याहो डुरंतता ॥ ८६ ॥ देशांतरगतः क्लृप्त-संदंशो नि-पुणस्तदा ॥ शोकांधकारवैधुर्य-मपर्यंतमथाप्तवान् ॥ ८७ ॥ एतस्य तामनपराधज्ञवां विपत्ति-मालोकयन्नियतमकुरितोरुखेदः ॥ देवस्तदा निखिलविष्टपकर्मसाक्षी । कक्षीचकार सवितापि पयोधिकंपां ॥ ८८ ॥ इति मलधारिश्रीदेवप्रज्ञसूरिविरचिते श्रीमृगावतीचरित्रे द्वितीयो विश्रामः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ तृतीयो विश्रामः प्रारज्यते ॥

अथ प्रानस्तमःस्तोमः । समस्तोऽप्यस्तमाययौ ॥ निपुणस्य परं स्वांते । समुद्दीज्ञूय संस्थितः ॥ १ ॥ तदानीं च दशाप्याशाः । सप्रकाशाश्चकासिरे ॥ एका तु निपुणस्याशा ।

संदधे ह्यंधकारतां ॥ २ ॥ स्वैरं भानोर्व्यजृंभंत । जगदानंदकराः कराः ॥ किंत्वकिंचित्करो जा-
त–स्तस्य वामेतरः करः ॥ ३ ॥ यियासोस्तस्य साकेतं । देवेन द्युतिमालिना ॥ पंथा प्रका-
शयां चक्रे । कृपयेव स्वयं करैः ॥ ४ ॥ साकेतं स ययौ यक्षं । लक्षीकृत्य सुरप्रियं ॥ स्मर्त्त-
व्यः सोऽनुवर्त्तव्यो । विपत्त्राणक्षमो हि यः ॥ ५ ॥ उपोषितः स तं भक्त्या । पर्युपासांबभूव
च ॥ तस्मै प्रणयिने यक्षो । मंक्षु साक्षाद्बभूव च ॥ ६ ॥ निजगाद च तं यक्षः । कथं वत्सा-
सि दुःखितः ॥ ततो वृत्तांतमेतस्य । तं सर्वं निपुणोऽन्वधात् ॥ ७ ॥ तं प्रसन्नोऽथ निर्व्या-
जं । व्याजहार सुरप्रियः ॥ चित्रयिष्यति हस्तस्ते । सव्यः सव्येतरो यथा ॥८॥ मम प्रसा-
दतो वत्स । कलाकिसलयैर्नवैः ॥ सच्छायो भव शाखीव । दग्धः पल्लवितोऽधिकं ॥ ९ ॥

इत्युक्त्वांतर्हिते यक्षे । चिंतयामास चित्रकृत् ॥ अकारणमहो राज्ञा । क्रूरेणापकृतं म-
म ॥ १० ॥ उपकारोऽपकारो वा । यस्य व्रजति विस्मृतिं ॥ पाषाणसुहृदस्तस्य । जीवितव्या-
भिधा मुधा ॥ ११ ॥ उन्मूलयामि निर्मूलं । नदीरय इव द्रुमं ॥ शतानीकं जघात्माऽपि । न-
चेत्तन्मे वृथा जनुः ॥ १२ ॥ नेयो मृगावतीरूपा–देव मृत्युं मयाप्यसौ ॥ इत्यालोच्या-

ऽचिरात्तस्याः। स पटे रूपमालिखत् ॥ १३ ॥ उच्छलत्कामकल्लोलः । स्त्रीलोलः सैन्यवारिधिः ॥
श्रूयते शौर्यचडश्च । चंडप्रद्योतभूपतिः ॥ १४ ॥ तस्य दृष्टिपथं नीते । रूपेऽस्मिन्मे समीहि-
त ॥ भविष्यतीति संचिंत्या-सावतीमगमत्पुरीं ॥ १५ ॥ युग्मं ॥ स तस्मै दर्शयामास ।
तामालिख्य मृगावतीं ॥ निर्वर्ण्य वर्णयामास । सकामः सोऽपि भूपतिः ॥ १६ ॥ अस्या मु-
खस्य पीयूष-गभस्तिः प्रतिहस्तकः ॥ बंधुः सुवर्ण वर्णस्य । नेत्रयोर्मित्रमुत्पलं ॥ १७ ॥ अ-
धरो विद्रुमः पाणी । पारिजातस्य पल्लवौ ॥ स्तनौ कुंभौ सुरेभस्य । जघनं सिंधुसैकतं ॥
॥ १८ ॥ असौ स्वर्लोकवास्तव्या । यद्वा पातालवासिनी ॥ न मानुषीषु योषित्सु । दृश्यते
रूपमीदृश ॥ १९ ॥ यस्याः प्रतिकृतिः केय-मित्यपृच्छत्ततो नृपः ॥ तस्मै विस्मितचित्ताय ।
तथ्यमेषोऽप्यचीकथत् ॥ २० ॥

अस्ति देव नृदेवस्य । शतानीकस्य वल्लभा ॥ रूपेण विजितानंग-मृगनेत्रा मृगावती
॥ २१ ॥ सा मालवेश लेशेन । समालेखि पटे मया ॥ नालेख्ये स्याद्यथावस्तु । विश्वक-
र्मापि कर्मठः ॥ २२ ॥ कर्णाभ्यर्णचरे तस्य । वचस्युज्जयिनीपतिः ॥ कुसुमेषोरिषुव्राते-विं-

॥ ५५ ॥

स्मृतात्माऽन्नवत्तदा ॥ २३ ॥ अचिंतयच्च संत्येव । शिवांगारवतीमुखाः ॥ महादेव्यो ममाप्ये-
ता । वीतोपमवपुःश्रियः ॥ २४ ॥ लक्षांशेनापि लक्ष्यंते । समाना नानया पुनः ॥ नान्याः
पर्वरजन्योऽपि । श्रयंते कौमुदीश्रियं ॥ २५ ॥ अनया विकलं नांतः–पुरमंतःपुरं मम ॥ न
चंपकलता यत्र । काननं तन्न काननं ॥ २६ ॥ कयाचिद्धरवर्णिन्या । कामः कामं कृतार्थ्यते
॥ स्पृष्टश्चंद्रिकया चंद्र–कांतः श्रवति नान्यथा ॥ २७ ॥ अपरात्रिः पुरंध्रीन्नि–र्मया कामः
कदर्थितः ॥ इदानीं त्वनया तत्वात् । पुनर्जीवतु सर्वथा ॥ २८ ॥ विकल्प्यैवं स्वयं शिक्षां ।
दत्वा दूतशिरोमणिः ॥ लोहजंघोऽतिजंघालः । कौशांब्यां प्रेषि न्नूभुजा ॥ २९ ॥ अवस्थि-
तं सन्नास्थाने । निद्रास्थानसहोदरे ॥ दूतः स वेगादागत्य । शतानीकमन्नाषत ॥ ३० ॥ नु-
र्धीपतिरवंतीशः । कौशांबीश मुखेन मे ॥ न्नवंतमादिशत्येवं । सावधानोऽवधारय ॥ ३१ ॥
राजंते तेजसा तावद् । ग्रहतारासितांशवः ॥ सर्वतेजस्विनां राजा । यावत्संसहते रविः ॥३२॥
नुत्पन्नरुचिरादत्ते । तेन्यस्तेजो निजं यदा ॥ समं तेन तदा तेषां । कोऽपि किं कलहा-
यते ॥ ३३ ॥ तेजांसीव सहस्रांशोः । कौशांबीपरमेश्वरः ॥ रक्षति हंत रत्नानि । रत्नगर्भो न-

वानि मे ॥ ३४ ॥ अस्ति सीमंतिनीरत्नं । प्रिया तव मृगावती ॥ संसेदे तव भोगार्थ—मिय-
त्कालं मया खलु ॥ ३५ ॥ प्रस्थापयेथास्तदिमा—मिदानीं नीरजेक्षणां ॥ गृह्णाति चेदनं स्वा-
मी । गोपालः किमु रुष्यति ॥ ३६ ॥ इत्यादिष्टो नरेंद्रेण । राजन्नर्थः समर्थ्यतां ॥ नीतिरप्य-
नुजानाति । दारैरप्यात्मरक्षणं ॥ ३७ ॥ अथावज्ञानमाज्ञाया—मकालज्ञतया तव ॥ तन्मा-
मागतमीक्षेथा । रणाय प्रगुणो भव ॥ ३८ ॥ इत्युक्त्वा विरते दूते । जीमूतध्वनिबंधुना ॥
स्वरेणाथ शतानीकः । प्रतिवक्तुं प्रचक्रमे ॥ ३९ ॥ कथमेतदकृत्यं ते । स्वामिना मानसे कृ-
तं ॥ कृत चेच्च कथ नीत—मिदं वचनगोचरे ॥ ४० ॥ तत्रापि निस्त्रपेणासि । प्रहितस्त्वं हु-
ताशय ॥ अहो राज्यमहो नीती—राज्यधर्मस्तव प्रभोः ॥ ४१ ॥ प्रदेशोऽपि प्रहादीना—मा-
क्रिनत्ति यदृच्छया ॥ तेज एव प्रभुत्वेन । न पुनः प्रेयसीरपि ॥ ४२ ॥ अपि दोर्दंडचंडानां । प-
रदाराभिलाषिणा ॥ अवश्यं सा दशास्यस्य । पदवी न दवीयसी ॥ ४३ ॥ किं चास्ति ना-
पराधोऽयं । तस्य मालवभूपतेः ॥ राजानो न हि जानंति । हितं स्वछदचारिण ॥ ४४ ॥
कि तु तत्रापराध्यति । भृत्योत्तमा भवादृशाः ॥ ये नाथमुत्पथे पांथ—मुपेक्षंतेऽनपेक्षया ॥

। निजनाथाय शंसति ॥ नाथः स नाथस्तेनोक्तं । हि
॥ ४५ ॥ भृत्यः स भृत्यो यः पथ्यं ।
तं कर्णे करोति यः ॥ ४६ ॥
जानेऽजनिष्ट विस्पष्ट—स्तव भाग्यविपर्ययः ॥
इत्यूचिवांसमुर्वीशं । दूतोऽवादीन्नरेश्वर ॥ कलत्रार्पणमात्रेण । त्रातुमुत्सह-
॥ ४७ ॥ यतो वाजिगजप्राज्यं । राज्यमात्मानमात्मजं ॥ विद्धि ध्रुवमवंतीशे । सैन्यं ते
से न हि ॥ ४८ ॥ भत्तरंगतुरंगेऽस्मि—न्नगाधे वाहिनीपतौ ॥ अरे दूत दुरुक्तं किं
सक्थुमुष्टिवत् ॥ ४९ ॥ एतन्निशम्य साक्रोशं । वत्साधिपतिरभ्यधात् ॥ चंडप्रद्योतखद्योतः
। जल्पाक इव जल्पसि ॥ ५० ॥ शतानीकसहस्रांशौ । युद्धमूर्द्धन्युदित्वरे ॥ इत्युक्त्वा तं
। कलयिष्यत्यदृश्यतां ॥ ५१ ॥ इत्थं कटु ब्रुवाणोऽपि । दूतोऽसीति न हन्यसे ॥ म-
तिरस्कृत्य । विससर्ज प्रजेश्वरः ॥ ५२ ॥ इत्युपेत्य मृगावत्यां । स्नेहाढ्यं तत्र भूपतेः ॥
न्युमुद्दीपयामास । दूतो वात इवानलं ॥ ५३ ॥ ततो भूयांसि तेजांसि । प्राप्तुं प्रद्योतभूप-
तिः ॥ प्रतस्थे प्रतिकौशांबीं । कौबेरीमिव भास्करः ॥ ५४ ॥ यस्तदा तरलैरश्वै—रूर्ध्वमुत्क्षि-
खलीकृतः ॥ सदानैः शांतितस्तुंगैः । सोऽपि रेणुः करेणुभिः ॥ ५५ ॥

॥५८॥

चतुरगचमूचक्र–समाक्रांतदिगंतरः ॥ कौशांवीसविधेऽवात्सी–द्व्रानुच्छेदयन्नयं ॥ ५६ ॥
आगतं सैन्यसंयुक्तं । ज्ञात्वा तं न्नयकंपितः ॥ कमप्यलन्नत क्षोन्नं । वत्सेश्वरपुरीजनः ॥५७॥
पुर्या वहिस्तु वास्तव्यः । क्रातस्तस्याग्रसैनिकैः ॥ लोकस्तत्कालमस्तोकः । किं न चक्रे न्न-
याकुलः ॥ ५७ ॥ कातर्याच्चक्रिरे केचि–त्पलायितुमुपक्रमं ॥ तत्रैवासूत्रयामासु–र्न्नीमं यम-
गृहं परे ॥ ५ए ॥ न्नपर्युपरि जातानि । वालापत्यानि पश्यतः ॥ तदैकस्य दरिद्रस्य । विदद्रे
हृदयं क्षणात् ॥ ६० ॥ विक्रीणतेस्म वणिज–स्तदा न्नांमं यथा तथा ॥ परचक्रन्नयाक्रांता ।
न च क्रीणंति नूतनं ॥ ६१ ॥ आत्ममूलमथ ज्ञात्वा । विग्रहं नृपयोस्तयोः ॥ मृगावती त-
दात्मानं । निर्निंदेन्नमनिंदिता ॥ ६२ ॥ हा धिग्मे वपुरेतस्य । नासीदजननं कथं ॥ अस्य यु-
द्धप्रवधस्य । यद्नूव निवधनं ॥६३॥ दुर्न्नगाश्च कुरूपाश्च । मन्ये धन्याः कुलस्त्रियः ॥ नाहंपू-
र्विकया तासां । ढौकंते शीलदस्यवः ॥ ६४ ॥ महतामपि कोऽप्येष । दुरुच्छेदो मतिन्रमः ॥
देहे मांसमये स्त्रीणां। प्रतिन्नासो यदन्यथा ॥ ६५ ॥ ध्रुवमेष मणिं मूर्ध–स्तक्षकस्य जिघृक्ष-
ति ॥ ममापि शीलन्नंगाय । यद्दुरात्मा व्यवस्यति ॥ ६६ ॥

अथोल्कापातनिर्घात—काश्यपीकंपनादिकैः ॥ संजातमुत्पातशतैः । शतानीकपुरे तदा ॥६७॥ अरिं वीक्ष्य बलोन्मत्तं । दुर्निमित्तानि तानि च ॥ निजानीके शतानीको । महातंकमशंकत ॥ ६८ ॥ जयप्रसृमरस्याधि—सौहार्दादिव सत्वरं ॥ तस्य व्याधिरतीसारः । प्रससार सुदुस्सहः ॥ ६९ ॥ साधिव्याधिरसौ चक्रे । चिंतामित्यविचारधीः ॥ पतितोऽहमहो मृत्यु—निकटे संकटेऽधुना ॥ ७० ॥ इतः कूप इतो व्याघ्र । इतः सिंधुरितः फणी ॥ इतोऽरातिरितो व्याधिः । करवाणि कथमीदृशः ॥ ७१ ॥ निगृहीतो हताशेन । चित्रकृद्यो मया पुरा ॥ तेन बद्धक्रुधा नून—मिह्नमुद्धापितो रिपुः ॥ ७२ ॥ अवधूय निजान् वृधान् । क्रोधांधैर्यद्विधीयते ॥ जवेत्तस्य परीणामो । ममेवानुशयावहः ॥ ७३ ॥ स्वकर्मणः परीपाक—मेवमाकलयन्नयं ॥ कस्मैचिन्नैव कुप्यामि । नैव कोप्ये च कंचन ॥ ७४ ॥

इति चिंतातपाक्रांतं । दुरंतव्याधिबाधितं ॥ जवाच विनयादात्त—सतीमार्गा मृगावती ॥ ॥ ७५ ॥ धात्रीश मंत्रिन्निश्चक्रे । पुरी पिहितगोपुरा ॥ वप्रश्च विविधैर्योधैः । संरुद्धः कपिशीर्षगैः ॥ ७६ ॥ शीलं मे मलिनीकर्तुं । नालं मालविकाधमः ॥ स्वामिन् वज्रमणेर्भेदे ।

कस्य स्यात्प्रज्ञविष्णुता ॥ ७७ ॥ असावुदयनः सूनु—रधृष्यस्तव विद्विषां ॥ वालोऽप्यालोक्यते केन । दृशाप्यहिमदीधितिः ॥ ७८ ॥ तस्मान्मास्म पुरीं मास्म । मां मास्म शिशुमात्मजं ॥ एक विवेकमालंब्य । नूनाथ हृदये कुथाः ॥ ७९ ॥ केवलं परमात्मानं । सर्वज्ञं ज्ञातनंदनं ॥ उपासितं वरं चित्ते । निश्चितः प्रणिधेहि तं ॥ ८० ॥ सर्वेषु पुरुषार्थेषु । धर्म एवागिनां निजः ॥ जन्मिनां यो जवत्येकः । परलोकपथेऽग्रगः ॥ ८१ ॥ अष्टादशापि डुष्टानि । पापस्थानानि संवृणु ॥ स्वामिन्नस्यामवस्थाया । स्मर पंचनमस्कृतिं ॥ ८२ ॥ अनुशास्तिमिमा तस्या । हृदये स्वादयंस्तदा ॥ शतानीकोऽस्तसंसार—संतापः प्राप पंचतां ॥ ८३ ॥ तदापि व्यापि सा देवी । नो शोकेन विवेकिनी ॥ विस्फुरंति किमालोके । लोलास्तु तिमिरोर्मयः ॥ ८४ ॥ ततः पत्युर्निरौत्सुक्या—द्विधायाथोर्ध्वदेहिकं ॥ इत्थं चेतसि निश्चिक्ये । कर्त्तव्यं समयोचितं ॥ ८५ ॥ विसूत्रिततनुत्राणं । विना नूपादजूदू द्वयं ॥ उज्ज्वलं मम शीलं च । राज्यमेतच्च संप्रति ॥ ८६ ॥

एतदू द्वितयमप्यत्र । यथा प्रद्योतनूपतिः ॥ नैव स्वछंदमास्कंदे—त्तथा कार्या मतिर्मया

॥ ८७ ॥ यद्येतस्य तिरस्कारः । पन्नगस्येव दर्श्यते ॥ तदाविष्कृत्य दौरात्म्यं । समग्रं ग्रसते
ह्यसौ ॥ ८८ ॥ अन्यथैव पराजेष्ये । तदेनमिति चेतसि ॥ निश्चित्य चतुराभिख्यां । सखीमा-
ह्वास्त सा ततः ॥ ८९ ॥ सा सकर्णा तया कर्णे । दत्वा शिक्षां मनीषितां ॥ प्रद्योतभूभुजोऽ-
भ्यर्णे । प्रहिता हितमानसा ॥ ९० ॥ उपेत्य सा रहः प्राह । प्रणयादिति भूपतिं ॥ भवंत-
मंतिकस्थेव । राजन् देवी वदत्यदः ॥ ९१ ॥ अस्तं दिनकृयादासे । स्वामिनि द्युतिमालिनि ॥
रजनीजानिमुन्मत्ता । स्वतः संक्रामति द्युतिः ॥ ९२ ॥ दिवं याते शतानीके । तदेषोऽपि ज-
नोऽधुना ॥ प्रेमपाशसमाकृष्ट–स्तवाऽऽगंता स्वयंवरः ॥ ९३ ॥ ममायं सरलो बाल–स्तनुज-
स्तनुसैनिकः ॥ बलिष्ठारातिसंक्लिष्टः । संप्रत्यंचति शोच्यतां ॥ ९४ ॥ पराभवमरातिभ्यो । वी-
प्सया लप्स्यते ह्यसौ ॥ इति मामौरसस्नेहो । विक्लवीकुरुतेतरां ॥ ९५ ॥ विभ्रमेनं मनोऽभी-
ष्ट–सिद्धौ विद्धि धराधिप ॥ वदंतीमेव तामेवं । बभाषे रभसान्नृपः ॥ ९६ ॥
कुतो वैक्लव्यवैयग्र्यं । भद्रे भद्रकरे मयि ॥ उपद्रवति दारिद्र्यं । मित्रे रत्नाकरेऽपि किं ॥
॥ ९७ ॥ मद्भुजमंडपच्छाये । सुखासीनस्य किं भवेत् ॥ सुतस्योदयनस्येह । शत्रुभ्यस्ताप-

विप्लवः ॥ ९८ ॥ चतुरोवाच वालोऽयं । देवीयं वर्त्तिनी त्वयि ॥ अरिन्योऽन्यर्णचारिन्यः ।
कुतः स्यादकुतोभयः ॥ ९९ ॥ एवं सति महाराज । सत्यमेतद्धि जायते ॥ योजनानां श-
तैर्वैद्यः । क्रुद्धो मूर्ध्नि फणी पुनः ॥ १०० ॥ जगादोज्जयिनीनाथः । कथ्यतां कथमात्मजं ॥
सर्वथा निर्भयं मन्य । मन्यते स्वामिनी तव ॥ १ ॥ साथ प्रोचे नृपावंती–पक्कं चेदिष्टिका-
चयं ॥ झगित्यानीय कौशांब्याः । प्राकार कुरुषे नवं ॥ २ ॥ भुवोनाथ भवेद्देवी । तदा पू-
र्णमनोरथा ॥ तवापि वांछाऽविच्छेदो । भविता नात्र संशयः ॥ ३ ॥ स तथेति प्रतिश्रुत्य । च-
तुरां ता विसृज्य च ॥ वप्रोपक्रममारेभे । कामिनां किमु दुष्करं ॥ ४ ॥ श्रेण्यामवंतीकौ-
शाम्ब्यो–रंतः कृत्वा स सेवकान् ॥ चतुर्दशापि भूपाला–नुपानिन्ये स इष्टिकाः ॥ ५ ॥ ता-
भिरभ्रंकषाकारं । स प्राकारमचीकरत् ॥ देवाना मनसा राज्ञां । वचसा कार्यसिद्धयः ॥ ६ ॥
भूपः स्मररसानूप–स्तन्मनास्तन्निदेशतः ॥ अपूरयच्च कौशांबीं । तृणधान्येंधनादिभिः ॥ ७ ॥
नृपांकुरितकंदर्पः । प्रसर्पत्पुलकस्ततः ॥ व्यसृजद्विनयोदारां । दूतीं प्रतिमृगावतीं ॥ ८ ॥ ग-
त्वा मृगावतीं प्राह । साहस संविधाय सा ॥ त्वां देवि मालवाधीशो । विज्ञापयति संप्रति

॥ ए ॥ कृते देवि समादिष्टं । ममाज्ञेयं विधीयतां ॥ भवत्युन्नतचित्तानां । प्रतिपन्नं हि ना-
न्यथा ॥ १० ॥

मृगावती ततोऽवादी—द्राजा ते दूति नूतनः ॥ स हि रक्षत्यनाचारं । किं पुनः कुरुते
स्वयं ॥ ११ ॥ श्रुतिः कापि स्मृतिः कापि । पुराणं वास्ति किंचन ॥ यत्रान्यदारसंभोगः ।
शुभोदर्कः प्रकीर्त्यते ॥ १२ ॥ जम्बानामपि कालेन । कालुष्यमपगच्छति ॥ वर्षासु कलुषी-
भूय । शरद्यंभः प्रसीदति ॥ १३ ॥ ततः प्राकारनिर्माण—प्रकारेण कृता मया ॥ अस्याऽन्या-
यप्रसक्तस्य । व्याजतः कालयापना ॥ १४ ॥ परं पापः कुदेवाक—मेनं न श्लथयत्यसौ ॥ न
कालेऽपि हि काकोलः । कालिमानं विमुंचति ॥ १५ ॥ आन्वीक्षिकीत्रयीं वार्त्तां । दंडनीतिं
च जानता ॥ दूति त्वदीयभूपेन । ज्ञातं नैतदपि स्फुटं ॥ १६ ॥ शीलं सतीनां नागानां । म-
णीन् केसरिणां सटाः ॥ एतान्यमीषामाछेत्तुं । कस्याप्यस्ति न योग्यता ॥ १७ ॥ तदिदं दू-
ति मद्वाचा । त्वया वाच्यः प्रभुर्निजः ॥ क राजा त्वं महाबाहु—रिदं दुश्चरितं क च ॥ १८ ॥
कुलीना नाम कौलीनान् । कामं कामान् प्रचक्रते ॥ अहल्यामकुलीनस्तु । चकमे मेघवा-

इनः ॥ १९ ॥ गुरुवर्गे वैनयिकं । विरुद्धस्मरनिग्रहः ॥ यूनामपि शुभंयूनां । नैसर्गिकमिदं
द्वयं ॥ २० ॥ तस्मादधर्ममन्यायं । मा धर्मनृपते कृथाः ॥ सतीशापानलज्वाला–रसान्निह-
श्च मास्मभूः ॥ २१ ॥ अभिधायेति गम्भीरं । दूतीं च विससर्ज सा ॥ वप्रं संवर्मयामास ।
नूतनं च ससौष्टवा ॥ २२ ॥ ततो दूतीमुखाद् ज्ञातं । राज्ञा तदनुशासनं ॥ च्युतफाल इव
द्वीपी । क्ष्मापः प्राप विलक्ष्यतां ॥ २३ ॥ सोऽचिंतयदहो बुद्धि–रहो तत्प्रौढिरद्भुता ॥ यदा-
त्तशस्त्रशास्त्रोऽपि । स्त्रियाप्येवं पराजितः ॥ २४ ॥ कुर्वे सवैकपं तस्या । विक्रमोपक्रमं परं
॥ मत्कर्तृकेण शत्रूणा–मसौ दुर्गेण दुर्जया ॥ २५ ॥ इति चिंतामपीलिसं । तमूचुर्मन्त्रिण-
स्तदा ॥ देव नीतिविपर्यासः । पश्यैवं पर्यवस्यति ॥ २६ ॥ अस्य पापैकमूलस्य । महारंभम-
हीरुहः ॥ इहक् पराभवपुष्प । फलमन्यद्भविष्यति ॥ २७ ॥

इतो मृगावती वीक्ष्य । तदा दुर्जयमात्मजं ॥ राज्ये निवेशयामास । पैत्रिके पितृस-
न्नं ॥ २८ ॥ हितवांस्तस्य सैन्येऽसौ । मंत्री यौगंधरायणः ॥ अजायेतां सुतौ वृद्ध–ध्वजि-
न्ययोः ॥ २९ ॥ इयेष साथ तीर्थेशो । यद्यागच्छेदपश्चिमः ॥ ततो गतोपसर्गा स्यां

। तस्याश्रित्य पदद्वयं ॥ ३० ॥ स एव व्यसनादस्मा–न्मामुन्मोचयितुं क्षमः ॥ कर्षत्येषः प्र-
ग भास्वान् । नलिनीं नलिनोदरात् ॥ ३१ ॥ अथोर्वीमुपकुर्वाणः । सर्वगीर्वाणपूजितः ॥ क-
ल्पद्रुमसमाकारः । कारुण्यैकमहार्णवः ॥ ३२ ॥ आलोक्य केवलालोका–त्तन्मनोऽभ्यागमत्प्र-
भुः ॥ परो हि महतामार्त्ति–परित्राणक्रमः खलु ॥ ३३ ॥ युग्मं ॥ सर्वज्ञस्य सुरोपज्ञ–व्या-
ख्यासदसस्तदा ॥ क्रुध्यद्वीराणि वैराणि । शशमुर्दुःशमान्यपि ॥ ३४ ॥ ततोऽपसृत्य प्रद्यो-
तो–ऽप्यावासान् दूरमग्रहीत् ॥ अनावृतानि कौशांब्या । गोपुराणि च जज्ञिरे ॥ ३५ ॥ त-
दाऽऽजग्मुर्जिनेशस्य । व्याख्यौकसि दिवौकसः ॥ नृपोऽपि चंडप्रद्योत–स्तत्र प्रांजलिराययौ
॥ ३६ ॥ मनसा रोमकूपैश्च । बिभ्रती हर्षमंजसा ॥ आगान्मृगावती सार्द्धं । वत्सराजेन
सूनुना ॥ ३७ ॥

तत्रोपदेशपीयूष–स्तनयित्नुरभूत्प्रभुः ॥ चातक इव तत्पान–सज्जश्चासीज्जनो यदा ॥३८॥
एकेन पाणिना धन्व । इषूनन्येन पंचपान् ॥ कारणं कलयन् कश्चि–दाजगाम पुमांस्तदा ॥
॥ ३९ ॥ सर्वज्ञोऽयमिति ज्ञात्वा । विनीतः स्वामिनोंऽतिके ॥ मनसैव समारेभे । स संदेह-

॥ ६६ ॥

मपोदितुं ॥ ४० ॥ लोकोपकारमालोक्य । न्नाविनं न्नगवांस्तदा ॥ वचसा स्वछ पृछेति । सर्वेवेदी तमादिशत् ॥ ४१ ॥ ततस्तारस्वरं सम्–न्नेत्रमालार्चितस्तदा ॥ स व्याजहार न्नगवन् । या सा सा सेति कण्यनां ॥ ४२ ॥ आमेति न्नगवानाद । तन्निशम्य च गौतमः ॥ किमेतदिति पप्रछ । लोकोपकृतये जिन ॥ ४३ ॥ सानुकंपमथोवाच । वाचयमचमूपतिः ॥ कथातिमहती सेयं । सावधानैर्निशम्यतां ॥ ४४ ॥

अस्तीह न्नरतक्षेत्रे । पुरी चंपेति नामतः ॥ सुवर्णकारः स्त्रीलोल–स्तत्रासीत्कर्मकिंकरः ॥ ४५ ॥ लीलयैव पणे दत्वा । सुवर्णशतपंचकं ॥ वरेण्यकन्यकादर्श–मसौ वरयति क्षणात् ॥ ४६ ॥ शतानि पच पत्नीनां । तस्याऽजायंत च क्रमात् ॥ न्नोगैंधनैश्च कामाग्नि–र्न तृप्यति कदाचन ॥ ४७ ॥ तासां मध्याच्च यस्याः स्या–द्यदा न्नोगाय वारकः ॥ सा तदैवांगशृंगार–मंगीकुर्वीत नान्यदा ॥ ४८ ॥ नरेण सोदरेणापि । संलापो न कदाचन ॥ तासामन्नूच्च तास्तेना–ऽदह्यत निजमानसे ॥ ४९ ॥ नित्यं निजामपि छायां । पुरुषाकारधारिणीं ॥ तदंतश्चारिणीं पश्यन् । व्यानशेऽमावसूयया ॥ ५० ॥ सदा तदीय नेदीयान् । निषणः संमुखो मुखं

॥ ६७ ॥

॥ सोऽनिमेषाक्रमैक्लिष्ट । वृषभः शांभवो यथा ॥ ५१ ॥ अन्यदा प्रीतिपात्रेण । मित्रेणामं-
त्र्य गौरवात् ॥ भोक्तुं नीतो विनीतेन । स्ववेश्मायं कथंचन ॥ ५२ ॥ युगपच्चिंतयामासुः ।
समस्ता अपि तास्तदा ॥ धिग् धिग् गुप्ताविव क्षिप्ता । वयमीर्ष्यालुनाऽमुना ॥ ५३ ॥ दीपां-
कुरैरिवांधाना–मस्माकमतिभासुरैः ॥ उपयोगविधौ वंध्यै–रेभिराभरणैः किमु ॥ ५४ ॥ अ-
मिताऽगुरुकर्पूर–कस्तूरीचंदनादिभिः ॥ किमेभिर्वस्तुभिर्दारैः । क्लीबानामिव निष्फलैः ॥ ५५ ॥

अमीषां भोगपर्यायो । भावी वारकवासरे ॥ स च क्रमादतिक्रांतै–र्दिनानां पंचभिः
शतैः ॥ ५६ ॥ बंदीकृत्य निरुद्धाः स्म–स्तदनेन दुरात्मना ॥ अद्य नो दुःखमादाय । याव-
त्क्वापि गतोऽस्त्यसौ ॥ ५७ ॥ तावत्स्वैरं परीभोगान् । विलसामो यदृच्छया ॥ एवं मनसि
कुर्वंत्यः । सर्वाः स्नांतिस्म तास्तदा ॥ ५८ ॥ ततः परिमलोद्गारै–र्झटित्याहूतषट्पदं ॥ सद्यो
जागरितानंग–मंगरागं वितेनिरे ॥ ५९ ॥ हारार्द्धहारकेयूर–प्रमुखं सुमुखीजनः ॥ पर्यधत्त
निजांगेषु । चिरदृष्टमिव प्रियं ॥ ६० ॥ वरैर्बभूवुर्वासोभिः । शोभमानांगयष्टयः ॥ लावण्यै-
कतरंगिण्यो–ऽनंगसंतापहाश्च ताः ॥ ६१ ॥ यावद्वेषमशेषं ताः । कृत्वा स्वःस्त्रीविजीत्वरं ॥

ता बालाः खलु विंबोष्ठ्य—स्तिष्ठंत्यादर्शपाणयः ॥ ६२ ॥ प्रत्यागतः पतिस्ताव—त्तादृशीश्च
निरीक्ष्य ताः ॥ धावतिस्म क्रुधा हंतुं । रूक्षाक्षरमधिक्षिपन् ॥ ६३ ॥ तासामन्यतमा तेन ।
मर्मणि प्रहता तथा ॥ प्रवासमसवस्तस्या । त्रयादिव यथा व्यधुः ॥ ६४ ॥ ततश्चिंतितमन्या-
भि—र्भयोत्थापितवेपथु ॥ एषोऽस्मानपि खल्वस्याः । पथि पांथीकरिष्यति ॥ ६५ ॥ ततोऽ-
सौ ध्रुवमस्माक । वध्यो वधसमुद्यतः ॥ हतानि संमुखं हंतु—रुज्झंति जलान्यपि ॥ ६६ ॥
ताभिरित्यात्तरोषाभिः । सममाहत्य दर्पणैः ॥ पराशुराशु स क्रूर—श्चक्रे वक्रमनःस्थितिः ॥६७॥
पतिं व्यापाद्य ताः सर्वाः । पश्चात्तापमिति व्यधुः ॥ भविता नः परीवादः । पतिव्या-
पादिका इति ॥ ६८ ॥ पापानां तत्वतो नास्ति । शरणं मरणं विना ॥ अन्यथा नो धरित्री-
शो । दृग्विडंबयिष्यति ॥ ६९ ॥ न च स्मः पातकादस्मा—न्मुखं दर्शयितुं क्षमाः ॥ भरीकृ-
त्य ततो मृत्यु । यामो दुःखांबुधेस्तटं ॥ ७० ॥ एवं विमृश्य निःक्षेपि । घनामिंधनमालये ॥
तत्राशुशुक्षणिस्तत्र । चात्मा ताभिस्ततः क्रमात् ॥ ७१ ॥ अकामनिर्जरायोगा—न्मृत्वा च
शुभभावतः ॥ नरेष्वजनि तत्रासा—मेकोनं शतचक्रं ॥ ७२ ॥ नरास्ते च समीपस्था । दे-

वादेकत्र संगताः ॥ विषमेऽध्युषिताः शैले । दस्युतां पर्युपासते ॥ ૭૩ ॥ या हता प्रेयसी ते-
न । प्राप्य तिर्यक्षु जन्म सा ॥ स्फीते विप्रकुले सापि । पुत्रत्वेनोदपद्यत ॥ ૭૪ ॥ मृत्वा
सुवर्णकारश्च । तिर्यक्षु बहुधाप्यभूत् ॥ ततः कर्मवशात्तस्य । स्वसाऽजनि कनीयसी ॥ ૭૫ ॥
स तदानीं विनीतात्मा । तनुजन्मा द्विजन्मनः ॥ पंचवत्सरदेशीयो । निर्देशार्हश्च वर्त्तते ॥
॥ ૭૬ ॥ ततः स तस्या बालाया । भृशं चपलतास्पृशः ॥ मातापितृभ्यामादिष्टो । बाध्यत्वे
क्रीमनकृते ॥ ૭૭ ॥ स पाणिना स्पृशन्नंग–मत्यंतमृदुचारिणा ॥ क्रमात्तस्याः स्मरस्मेरं । गुह्य-
देशमथाऽस्पृशत् ॥ ૭૮ ॥ सा रोदनं विसस्मार । सस्मार स्मरकर्मणां ॥ तदा नरकरस्पर्शा–
कूणिताक्षी बभूव च ॥ ૭૯ ॥ ततोऽसौ विदितोपायः । सर्वदैवाऽकरोत्तथा ॥ सांकुरितमहा-
नंदा । रोदनाद्विरराम च ॥ ૮૦ ॥ तथा कुर्वंतमालोक्य । कदाचित्पितरौ भृशं ॥ क्रोधावेशा-
त्तमाकुश्य । निरवासयतां गृहात् ॥ ૮૧ ॥ अथ निर्वासितो दूर–मटवीषु परिभ्रमन् ॥ स तैः
प्राग्जन्मसंबद्धै–र्दस्युभिः समगच्छत ॥ ૮૨ ॥ ततः संमिलितनाथ । विधेरादेशतस्तथा ॥ च-
क्रे पंचशती पूर्णा । दस्यूनां तेन दस्युना ॥ ૮૩ ॥ बालिका साथ बाल्येऽपि । तीव्रवेदोदय-

त्वतः ॥ दुराचारप्रवृत्ताऽन्नू–दहो कामस्य वामता ॥ ૮૪ ॥ सा कन्यापि कुशीलेति । पितृन्यामपि तत्यजे ॥ तरवोऽपि त्यजत्येव । दुर्वातोपहतं फलं ॥ ૮૫ ॥ साऽनर्गलेंद्रियग्रामा । ग्राममेकमशिश्रयत् ॥ स्वैरिणीत्वेन तत्रापि । गणिकात्वे ह्यवर्त्तत ॥ ૮૬ ॥ शतानि पंच ते चौराः । कुतोऽप्येत्य निरत्ययं ॥ लुंटनैकपटीयांस–स्तं ग्राममुपडुद्रुवुः ॥ ૮૭ ॥ तस्य कुप्यमकुप्यं च । धनं जीवधनं च ते ॥ गृहीत्वाऽकृत्यनिष्णाता । निजं स्थानं प्रतस्थिरे ॥ ૮૮ ॥

तानालोक्य प्रियालोक–सुखस्वादमवाप्य सा ॥ तेषु पूर्वन्नवाऽन्यासाद् ॥ रिरंसामाससाद च ॥ ૮૯ ॥ ततस्तान् व्रजतोऽवादी–दहो साहसिकोत्तमाः ॥ मे सुखं हृदये यत्र । तत्र वस्तस्करव्रतं ॥ ૯૦ ॥ एषास्मि न्नवतां नित्य–मर्थसंपादनक्षमा ॥ तन्मामह्नाय गृह्णीत । संगृह्णीत सुखश्रियं ॥ ૯૧ ॥ तन्नावज्ञास्ततस्तेऽपि । सगीरंतेस्म सस्मिताः ॥ एहि न्नद्रे द्रुतं शर्म । गृहिष्यामः परस्परं ॥ ૯૨ ॥ तामित्युक्त्वात्मना साकं । ते निन्युर्निजपर्वते ॥ मृगाक्षीं तादृशीं प्राप्य । कः सकामो विमुंचति ॥ ૯૩ ॥ तत्राऽहोरात्रमप्येतां । ते प्रत्येकमनेकधा ॥ विकस्वरस्मराः स्मेर–मुखांन्नोजामभुंजत ॥ ૯૪ ॥ तथापि मन्मथोन्माद–स्तस्याः

प्रत्युत वर्द्धते ॥ कंडूयनाद्दि कंडूति–र्वर्द्धते कामपामयोः ॥ ९५ ॥ तां तथाक्रम्य भुंजाना–
स्ते चक्रुरिति चेतसि ॥ एतस्याः खलु जाग्येव–मवलाया बलक्षयः ॥ ९६ ॥ तद् द्वितीया
द्वितायास्याः । कार्यास्माभिरसंशयं ॥ अस्मद्भोगविभागेन । या नित्यं सुखयत्यमुं ॥ ९७ ॥
एतद्विचिंत्य चक्रेऽस्या । भोगश्रमविभागिनी ॥ अपरा युवतिः कापि । तैरत्यंतदयालु-
भिः ॥ ९८ ॥ तत्र या प्राक्तनी पत्नी । सा खेदमतिमेदुरं ॥ सपत्नीसंगमाल्लेभे । सर्वस्वह-
रणादिव ॥ ९९ ॥ अथाच्छेत्तुं प्रवृत्तायाः । कामं कामसुखश्रियं ॥ व्यापादनं कनीयस्या–स्त-
स्याः सा स्म समीहते ॥ १०० ॥ परं सा सन्निधौ तेषां । न तां हंतुमभूत्प्रभुः ॥ प्रौढगोप-
परीवारां । वृकी मुग्धामजामिव ॥ १ ॥ एकदा काप्यवस्कंदं । दातुं तेषु गतेष्वसौ ॥ कूपो-
पकंठमानीय । मुग्धामेतामभाषत ॥ २ ॥ अंतःकूपं किमप्येत–न्मनुष्याभं हि दृश्यते ॥ त-
तोऽसौ तत्र पश्यंती । तया क्षिप्रं निचिक्षिपे ॥ ३ ॥ अथ सा नः क पत्नीति । ते पप्रच्छुरु-
पागताः ॥ जानीथ यूयमेवेति । तेभ्यः साऽप्युत्तरं ददौ ॥ ४ ॥ इत्यसूयोत्तरात्तस्या । विज्ञै-
र्विज्ञायि तैः क्षणात् ॥ सा वराकी सपत्नीति । नूनं व्यापादिताऽनया ॥ ५ ॥ अथ विप्रसुत-

श्चैर–श्चिंतयामास विस्मितः ॥ प्रपंचः पंचबाणस्य । गेयस्य च वचोऽतिगः ॥ ६ ॥ यद् द्वि-
तीयामियं दृत्वा । न्नोगश्रमविन्नागिनीं ॥ एवमेकैव सहते । कामं कामविमंबनां ॥ ७ ॥
इत्रमुत्कटकंदर्पा । किं न नाम न्नवेदियं ॥ वाव्येऽप्यनल्पचापल्या । सा हि दुष्टा स्व-
सा मम ॥ ८ ॥ अथवा संशयोन्माथी । वीरोऽन्यर्णेऽस्त्युपागतः ॥ ततस्तमन्निगच्छामि । पृ-
च्छामि च यदृच्छया ॥ ए ॥ अन्येत्येति धिया पृच्छन् । प्रच्छन्नं मनसैव मां ॥ प्रश्नं लोकोपका-
राय । कारितो गिर्मयं मया ॥१०॥ तदेव विषयग्रामो । निःसीमः परिन्नाव्यतां ॥ नागरा अपि
रागेण । यत्र वास्तव्यतां दधुः ॥ ११ ॥ छुरितः कपिकच्छ्वेव । पुरुषो विषयेच्छया ॥ रतिं न
लन्नते क्वापि । न्नवनोपवनेष्वपि ॥ १२ ॥ यः संन्नोगेन निष्णातः । कामतृष्णां चिकित्सति
॥ स त्रिदोषन्नवं दुःखं । सर्पिषा संजिहीर्षति ॥ १३ ॥ लीलयैव गुणग्राम–मुदग्रो मकरध्व-
ज. ॥ न्नस्मीकरोति सहसा । कृशानुरिव काननं ॥ १४ ॥ न स मंत्रो न तत्तंत्रं । गुर्वाज्ञापि
न सा क्वचित् ॥ पंचेषुविषदोषोत्था । लहरी येन शाम्यति ॥ १५ ॥ अहो मोहमयं नव्यं ।
कामिनीनयनांजनं ॥ इच्छ विपर्ययज्ञानं । येनोदेति पदे पदे ॥ १६ ॥

अंगनानाममी केशान् । वर्हान् जानंति वर्हिणां ॥ नेत्रे सरोरुहपत्रे । कपोलौ काम-
दर्पणौ ॥ १७ ॥ अधरं विद्रुमं वक्त्रं । पार्वणं रोहिणीपतिं ॥ पयोधरौ सुधाकुंभौ । करौ क-
॥ ३४ ॥ ल्पद्रुपल्लवौ ॥ १८ ॥ नाभिं चेतोभुवो वापीं । जघनं सिंधुसैकतं ॥ ऊरू च कदलीस्तंभौ ।
चरणौ च कुशेशयौ ॥ १९ ॥ त्रिभिर्विशेषकं ॥ एवं वामदृशामंग-मनंगाशयविह्वलाः ॥ मां-
सास्थिमयमप्येत-त्कामिनो मन्वतेऽन्यथा ॥ २० ॥ परिणाममहादुःखं । दुःखमूलमिदं ज-
नाः ॥ सुखं वैषयिकं तन्मा । सुखं जानीत जातुचित् ॥ २१ ॥ वीतशंकमनातंक-मात्यंति-
कमथाऽव्ययं ॥ ऐकांतिकमनंतं य-त्सुखं जानीत तत्सुखं ॥ २२ ॥ पयोमुचि जगन्नाथे । वा-
क्सुधामिति वर्षति ॥ आसीद्व्याख्यासदःक्षेत्रं । सद्यः संवेगशाद्वलं ॥ २३ ॥ देशनामृत-
मापीय । शांतमोहमहाविषः ॥ सोऽपि स्वामिसुहस्तेन । स्तेनः प्रव्रजितस्तदा ॥ २४ ॥
अथ सानंदमुत्थाय । संमीलत्करकुड्मला ॥ प्रभुं विज्ञपयामास । समयज्ञा मृगावती ॥ ॥ ३४ ॥
॥ २५ ॥ त्वयैवं कल्पिता स्वामिन् । देशनाद्य यथा त्वहं ॥ सुधासधर्मिणीचक्रे । चकोर्या
इव चंद्रिका ॥ २६ ॥ तन्मालवेशमापृच्छ्य । दूरमुच्छिन्नमत्सरा ॥ जिनेश प्रव्रजिष्यामि । तत्र

पादांतिकेऽधुना ॥ २८ ॥ तीर्थनाथस्ततोऽवादी–न्निजानेनान्मनोरथान् ॥ समर्थयेथास्त्वं मा-
स्म । विलंवेथाः पतिव्रते ॥ २९ ॥ मृगावती ततश्चंडं । चंडप्रद्योतन्नूपतिं ॥ उपेत्याऽनाकुलं
रम्य । सप्रश्रयमन्नाषत ॥ ३० ॥ यत्तवास्यान्निलापस्य । जातास्मि प्रतिकूलिकी ॥ आत्मा-
नुकूलमेवैत–ज्ञानीथास्त्वं जनाधिप ॥ ३१ ॥ न्नगवद्वदनांन्नोज–किंजल्कान् कष्टहारिणः
॥ उपदेशानिमान् राजन् । कदाचिन्मास्म विस्मरः ॥ ३२ ॥ इदानीमनुमन्यस्व । संयमग्र-
हणाय मां ॥ यः स्वर्गमपवर्गं च । मार्गोऽयमुपतिष्ठते ॥ ३३ ॥ विवेकोक्तिन्निरित्युक्तः। पर्ष-
त्प्रत्यकया तया ॥ अपत्रपिष्णुर्धात्रीश–स्तां तथेत्यनुमन्यत ॥ ३४ ॥ आयतिज्ञा ततो राज्ञी
। प्रद्योतपृथिवीभुजः ॥ अथोदयनमुत्संगे । निचिक्षेप तनुरुहं ॥ ३५ ॥ दत्वा दानानि दीने-
न्यः । प्रवर्त्य च महोत्सवं ॥ प्रन्नुपादांतिके प्रीता । प्रपेदे साथ संयमं ॥ ३६ ॥ तां गृहीत-
व्रतां वीक्ष्य । प्रियाः प्रद्योतन्नूभुजः ॥ अष्टागारवतीमुख्याः । संगत्यागं वितेनिरे ॥ ३७ ॥
प्रश्नकृद्यो जिनान्यर्णे । चौरः प्रव्रजितः पुरा ॥ स वोधयितुमेकोनां । चौरपंचशतीं ययौ ॥
॥ ३८ ॥ आख्याय विषयोच्छेदां । देशनां प्रभुनिर्मितां ॥ जागृज्जाग्यः स वैराग्यं । तेषामप्यु-

॥ ७५ ॥

न्मीलन्नावनास्मे-
दमीलयत् ॥ ३ए ॥ ततस्तेऽपि समस्तेऽपि । योषित्सौख्यपराङ्मुखाः ॥ यथा नरकमा-
र—मुररीचक्रिरे व्रतं ॥ ४० ॥ तया स्त्रिया तथा न्नोगा—त्पापपाथेयमर्जितं ॥
गेंऽपि । नैव तस्यास्त्रुटिष्यति ॥ ४१ ॥

अथ प्रदातुमारेन्ने । शिक्षां दीक्षामिव स्वयं ॥ सुधावीचिमुचा वाचा । मृगावत्यै जि-
नोत्तमः ॥ ४२ ॥ कल्याणि न्नाविकल्याणः । कश्चिदेव विपश्चितां ॥ कुर्यान्मनोरथानेतान् ।
लन्नते विरलः पुनः ॥ ४३ ॥ डुर्लन्नः संयमो लेन्ने । तत्त्वया ज्ञाततत्वया ॥ तन्नित्यमप्रमत्ता-
पि । कल्पोऽयमिति शिक्ष्यते ॥ ४४ ॥ प्रयतेथास्तथा न्नद्रे । यथा न्नद्रेण युज्यसे ॥ प्रव्र-
ज्याक्लेशमप्येनं । मन्येथा व्यर्थमन्यथा ॥ ४५ ॥ केवलेनापि शीलेन । डुर्लन्नं लब्धवत्यसि ॥
संयमेनामुना किंतु । त्रैलोक्यमपि जेष्यसि ॥ ४६ ॥ ततो ज्ञाने क्रियायां च । प्रवर्त्तेथाः
प्रयत्नतः ॥ सदैव द्वयमेतद्धि । विद्धि सिद्धिनिबंधनं ॥ ४७ ॥ प्रमादमादरान्मुक्त्वा । तत्वसर्व-
स्वदृश्वरि ॥ ज्ञानदर्शनचारित्रे । आयुष्मति मतिं कुरु ॥ ४८ ॥ तथेति प्रतिपेदाना । शिक्षां
सर्वविदा तदा ॥ असौ चंदनबालायाः । प्रवर्त्तिन्याः समर्पिता ॥ ४ए ॥ सा जिनेशोपदेशं

तं । कुर्वती सर्वतो हृदि ॥ तदभ्यासे कृताभ्यासं । प्रसादयति सादरं ॥ ५० ॥ अनन्यसदृशोऽन्यत्र । जगाम भगवानपि ॥ जिनेशस्त्वंशुमालीव । नैकत्र कुरुते स्थितिं ॥ ५१ ॥ चंडप्रद्योतभूपालः । पालयन् स्वं प्रतिश्रुतं ॥ पुनः सस्थापयामास । पुर्यामुदयनं नृपं ॥ ५२ ॥ नत्वं राजानमापृछ्य । समुत्सुकपरिछदः ॥ ततोऽवंतीमवंतीशः । क्रमशः प्राविशत्पुरीं ॥५३॥ अथ गमितसमस्तप्रत्यनीकांधकारो । मतिविभवगभस्तिद्योतितन्यायमार्गः ॥ उदयमुदयनोऽयं नव्यमासाद्य सद्यो । रविरिव भुवि तेजो निःसमानस्ततान ॥ ५४ ॥ इति मलधारिश्रीदेवप्रभसूरिविरचिते श्रीमृगावतीचरित्रे तृतीयो विश्रामः ॥

॥ अथ चतुर्थो विश्रामः प्रारभ्यते ॥

अथ वत्सेश्वरो वत्स्यान् । प्रशशासोग्रशासनः ॥ परं निरंतरं मातु–रस्मार्षीन्मातृवत्सलः ॥ १ ॥ रिक्तं प्रणामसंपृक्तै–र्मातुश्चरणरेणुभिः ॥ भालस्थलं महीपालः । समालिन्यममन्यत ॥ २ ॥ प्रजयोपास्यमानोऽपि । जनन्याः पर्युपासनं ॥ विनासौ सततं तेन । राज्येनापि न पिप्रिये ॥ ३ ॥ उन्मानमानसं प्रेक्ष्य । प्रेक्षावानथ पार्थिवं ॥ तं नुनोद विनोदेषु । मं-

त्री यौगंधरायणः ॥ ४ ॥ ततः कदाचिन्मत्तेभ-मभ्रमूपतिविभ्रमं ॥ सोऽधिरूढः श्रियं दधे ।
निबिभौजा बिभौजसः ॥ ५ ॥ कदाचिच्चतुरं जात्यं । सोऽतिरेकात्तुरंगमं ॥ अशिक्षयज्जतीश्चि-
त्राः । शालिहोत्रविचक्षणः ॥ ६ ॥ स्वसवित्रीचरित्राणां । स प्रबंधैः स्वयं कृतैः ॥ चक्रे घो-
षवतीपाणिः । कदाचिदुपवीणनं ॥ ७ ॥ गत्वा वनेभ्यो वन्येभान् । मत्तानपि कदाचन ॥ व-
श्यान् घोषवतीनादात् । स कृत्वा पुरमानयत् ॥ ८ ॥ एवं वशीकृताऽनेक-मत्तानेकपसंह-
तिः ॥ भूयसीर्गमयामास । स वासवसमः समाः ॥ ९ ॥ अवंतीभर्तुरन्येद्यु-र्मार्गसागरमा-
रुतिः ॥ लोहजंघाह्वयो दूत-स्तमागत्येत्यभाषत ॥ १० ॥ राजन् प्रभुरवंतीनां । त्वामाह स्ने-
हनिर्भरः ॥ सगर्वाः सर्वदेवेभ्यः । संपद्यंतामवंतयः ॥ ११ ॥ कृतार्थनेत्रनिर्माणो । भूयादु-
ज्जयिनीजनः ॥ त्वदीयदर्शनेनास्तु । चिरान्नः पारणं दृशोः ॥ १२ ॥ वत्सा वासवदत्ता मे ।
समेत्याध्याप्यतामिह ॥ अदृष्टपूर्वगंधर्व-कलासर्वस्वमंजसा ॥१३॥ इत्युक्तिवंतं तं दूत-मवा-
दीन्मेदिनीपतिः ॥ प्रभाते प्रथयिष्यामः । सकर्णं तव निर्णयं ॥ १४ ॥ इत्यादिश्य तमुर्वीशः
। प्रपेदे मंत्रिमंडपं ॥ मंत्रिणे कथयामास । तच्चावंतीशवाचिकं ॥ १५ ॥ उवाच सचिवोत्तं-

॥ ७८ ॥

स—स्ततो यौगंधरायणः ॥ वयं विप्रकृतास्तेन । स चास्मान्निरनेकधा ॥ १६ ॥ तदस्माक-
मय देव । देवानामिव दुर्मदः ॥ सदैवाऽकृत्रिमः शत्रु—र्विधुंतुद इवाधिकं ॥ १७ ॥ पुरा नो
दुःखदं कर्म । यदनेन दुरात्मना ॥ चक्रे तदलमालप्य । किं च देवोऽपि वेत्ति तत् ॥ १८ ॥
तन्नाथ विद्विषस्तस्य । गृहे गंतु न युज्यते ॥ किं तु राजसुतान्नेव । कलामध्येतुमेतु सा ॥१९॥
तदाकलय्य राजापि । वचस्तस्य वचस्विनः ॥ सदेशं लोहजंघाय । प्रातः प्रत्युत्तरं ददौ
॥ २० ॥ सा पार्थिवेन शिक्षार्थं । शिष्या नः प्रेष्यतामिह ॥ विनयो विनयादेति । गुर्वंतिक-
मिति क्रमः ॥ २१ ॥ इति लब्धोत्तरो दूतः । प्रद्योताय महीभुजे ॥ गत्वा निवेदयामास ।
यथादृष्ट यथाश्रुत ॥ २२ ॥ अथ वासवदत्तेति । मधुरामक्षरावलीं ॥ मुहुर्वत्साधिपो ध्याय-
न् । प्रसादं वरमासदत् ॥ २३ ॥ परेद्युर्विपिनोद्देशा—द्वेगादेत्य वनेचरः ॥ विनयावनतः क-
श्चि—द्वत्सराज व्यजिज्ञपत् ॥ २४ ॥ तव सीमांतकांतार—पर्यंते पर्यटन् प्रभो ॥ वन्योऽस्ति
निजशौंडीर्य—निर्जिताशागजो गजः ॥ २५ ॥ संवर्मितेन महता । ततः सैन्येन दुर्धरः ॥ व-
नं वनेचराख्यात—वर्त्मना निर्ययौ नृपः ॥ २६ ॥ देशे दवीयसि क्वापि । व्यवस्थाप्य विरू-

सोऽचलत्करिणोंतिकं ॥ २७ ॥
ध्रिनीं ॥ दधद्धोषवतीमिकां । सोऽचलत्करिणोंतिकं ॥ २७ ॥
अथाग्रेन्नूतमालोक्य । कुंजरं राजकुंजरः ॥ करेण कीणमादाय । मंजु वीणामवीवद-
त् ॥२८॥ विपंचीनादपीयूष—अश्ललुमनसो मृगाः ॥ अखंडमंडलीबद्धाः । परितस्तं सिषेवि-
रे ॥ ३१ ॥ अवेल्लत्तस्य वल्लक्या । यदा कर्णाध्वनि ध्वनिः ॥ योगींद्र इव नागेंद्रः । स्तिमि-
तांगस्तदाऽन्नवत् ॥ ३१ ॥ कूणिताक्रमविक्षिप्त—कर्णतालमनाकुलं ॥ एत्य राज्ञोंतिके तस्थौ ।
भुवि न्यस्तकरः करी ॥ ३३ ॥ तथावस्थे ततस्तस्मिन् । न्नृशं रन्नसनिर्न्नरः ॥ स वीणां वा-
दयामास । सकलो निष्कलस्वनं ॥ ३४ ॥ निःशेषविषयत्यागी । न्नूतग्रामश्चराचरः ॥ तदे-
काग्रः समग्रोऽपि । जज्ञे वाचंयमस्तदा ॥ ३५ ॥ सोऽपि दत्तसुधावादे । नादे निर्मग्नमानसः
॥ न वेद क्वास्मि कोऽस्मीति । योगीव ध्याननिश्चलः ॥ ३६ ॥ निर्यांतिस्म ततोऽकस्मा-
त्सिंधुरोदरकोटरात् ॥ न्नटाः शस्त्रस्फुटाः क्षिप्रं । बिलादिव महोरगाः ॥ ३७ ॥ अहो गृहीत
गृहीत । जीवग्राहममुं नृपं ॥ मास्म यासीदिति क्रूरा—स्ते जजल्पुः परस्परं ॥ ३८ ॥ वल्ल-
कीसल्लकीसांद्र—रसलालसमानसः ॥ सुन्नटैर्निकटीन्नूय । रुरुधे राजकुंजरः ॥ ३९ ॥ का-

कोलैरिव तैः पापै—र्निरुद्धः शाठ्यकर्मठैः ॥ राजहंसः स मीमांसा—मिति चेतसि निर्ममे ॥
॥ ४० ॥ नाय दंतावलः सत्यः । किंतु यंत्रमयः स्फुटं ॥ तदिदं विदधे कूटं । मम बंधाय
केनचित् ॥ ४१ ॥ एवं विपंचीव्यापार—पारवश्यमुपेयिवान् ॥ छलेन ही गृहीतोऽस्मि । धि-
ग्मामिभमनायुधं ॥ ४२ ॥ आपदामापतंतीना—माकर्षणकरं परं ॥ दुर्व्यसनं समाख्यातं ।
विद्वद्भिर्महीमरुले ॥ ४३ ॥ महेन्नबंधव्यसन—द्वारमासाद्य मेऽद्य तत् ॥ समागता विपत्प्रौ-
ढा । या तरीतुं न पार्यते ॥ ४४ ॥ याप्यापत्तरणोपाया । सापि दूरे विरूपिणी ॥ सेयमपा-
राकूपार—पेतुषः पोतविच्युतिः ॥ ४५ ॥ इति मिमांसमानोऽसौ । वत्सानां परमेश्वरः ॥ उ-
त्पाट्य सुभटैर्नीतः । पुरः प्रद्योतभूपतेः ॥ ४६ ॥ अवदातानुसारेण । प्रद्योतः पारितोषिकं ॥
वितीर्य तेषामादेशं । गमनाय समादिशत् ॥ ४७ ॥ कौशांबीशमवंतीशः । संभाव्य स्निग्ध-
या दृशा ॥ निजसिंहासनस्यार्द्धे । गौरवेण न्यवीविशत् ॥ ४८ ॥ आलपच्च महीपालं । महा-
वाहो कलाबुधे ॥ अमीभिश्छलितोऽस्मीति । मास्मांतर्मनसः कृथाः ॥ ४९ ॥

गजेंद्राश्च नरेंद्राश्च । सुवंश्याः सत्त्ववृत्तयः ॥ सत्कारायैव बध्यंते । छलतोऽपि निजाश्रि-

न्निः ॥ ५० ॥ सद्दक्षानिक्षुन्निः संतो । न्नवाद्दक्षान् प्रचक्रते ॥ निःपीमिता अपि मुहु–र्माधुर्यं
न त्यजंति ये ॥५१॥ ते हि सर्वत्र सत्कारं । लन्नंते गुणसौरन्नात् ॥ विन्यस्यंते शिरस्येव । कु-
सुमानि मनीषिन्निः ॥ ५२ ॥ तदेतस्यापराधस्य । कौशांबीश त्वमीशिषे ॥ वंशे नन्नश्च
न्नूमिं च । समं विलन्नते न किं ॥ ५३ ॥ बालगोपालयोरेषा । लक्ष्मीरायतने यथा ॥ सम-
स्तापि तथा वत्स । वत्सेश्वर तवाप्यसौ ॥ ५४ ॥ तवोपयोगिनी ह्येषा । सफलीन्नवति स्फु-
टं ॥ उपकारैकसारं मे । तद्वचो मंतुमर्हसि ॥ ५५ ॥ समानीय तदानीं त्वां । ममैवोत्संग-
संगितां ॥ स्वयं देव्या मृगावत्या ॥ तातीयांकः सुतः कृतः ॥ ५६ ॥ जलाशयान्ने कंगांता–
त्वयि मे प्रार्थनागवी ॥ प्रत्यादेशन्नयाद्वत्स । वितनोति गतागतं ॥ ५७ ॥ संन्नावयसि चेदा-
नीं । प्रतिषेधाऽन्नयाक्षरैः ॥ तदेषा चरति स्वैरं । त्वदीयश्रुतिगोचरे ॥ ५८ ॥ अथ वत्सेश्वरो-
ऽजल्प–त्ससौष्ठवमनिष्ठुरं ॥ मम वः सांत्वनान्नष्टो । हग्ग्रहपरान्नवः ॥ ५९ ॥ पितृकर्त्तृक-
वात्सल्या–च्चित्तं क्रीतमशंकितं ॥ कार्यं मद्धेतुके क्वापि । ममादिश नरेश्वर ॥ ६० ॥ सत्यु-
पादानसामर्थ्ये । तत्कार्यकरणक्रमः ॥ धात्रीधव तवादिष्टं । को नाम कुरुतेऽन्यथा ॥ ६१ ॥

उवाच चंडप्रद्योतः । कुलोद्योत निशम्यतां ॥ अस्ति वासवदत्तेति। पुत्री मे गोत्रजीवि-
तं ॥ ६२ ॥ आराधितेन दत्तेयं । वासवेन सुता मम ॥ ततो वासवदत्तेति । मयाऽस्या ना-
म निर्ममे ॥ ६३ ॥ श्रीनिर्विशेषाऽशेषांगा-मेतां निर्मितवानपि ॥ वेधा बभूव दुर्मेधा । व्यं-
गयन्नेकया दृशा ॥ ६४ ॥ एकेन सौरभेणेव । नयनेन विना कृता । कर्णिकारस्य साधर्म्यं ।
बिभरामास मे सुता ॥ ६५ ॥ तदेवंलांछनामेनां । को नाम परिणेष्यति ॥ इयं मामन्वहं हं-
त । चिंता जागरयत्यलं ॥ ६६ ॥ कलाशिक्षासु दक्षत्व-मस्याः केवलमीक्ष्यते ॥ तत्सुधीभि-
रुपाध्यायै-रेनामध्यापयाम्यहं ॥ ६७ ॥ कला संप्रति गांधर्वी । निःशेषाऽप्यवशिष्यते ॥ उ-
द्दिदतुर्मे तदेतस्या-स्त्वमाचार्यकमाचर ॥ ६८ ॥ विवस्वानेव तेजस्वी । वायुरेव महाबलः ॥
अंभोधिरेव गंभीर-स्त्वमेवैकोऽसि वैणकः ॥ ६९ ॥ अध्यापयेश्चाः किंत्वेतां । प्रतिसीरातिरो-
हितः ॥ येनैषा निजदोषेण । मनागपि न लज्जते ॥ ७० ॥ कंठे च घोषवत्यां च। द्वयेऽपि त्वं
प्रगल्भसे ॥ उभयस्यापि चैतस्य । पात्रं पुत्रीयमस्तु मे ॥ ७१ ॥ तत्तथेति प्रपेदाने । शता-
नीकतनूरुहे ॥ गंधर्वशालामुर्वीशः । स ततो निरमीमयत् ॥ ७२ ॥ वत्सराजः सुखं तस्थौ ।

तस्यां प्रद्योतनृपवत् ॥ अवाप नांगरकेभ्यः । स्वदेशगमनं पुनः ॥ ७३ ॥

कुचे वासवदत्तापि । पृथिवीपतिनाप्यथ ॥ वत्से तव कलाचार्यः । सर्ववित्समपद्यत ॥ ॥ ७४ ॥ न गीते लब्धसौभाग्य—स्तत्परः सोऽपि तुंबरुः ॥ न चापि वल्लकीनादे । नारदोऽपि विशारदः ॥ ७५ ॥ प्रतिगात्रं स्फुरच्चित्र—श्वित्रपंककलंकितः ॥ किंतु सोऽस्ति ततोऽधीष्व । पटांतर्धानवर्त्तिनी ॥ ७६ ॥ चापल्यात्पटमुत्पाट्य । त्वं चेदालोकयिष्यसि ॥ तव पुत्रि दुरंतोऽय—मामयः संक्रमिष्यति ॥ ७७ ॥ प्रद्योतेन ततः सर्वं । तथेति प्रतिपेदुषी ॥ कलां ग्राहयितुं तस्य । संभ्रमेण सुतार्पिता ॥ ७८ ॥ यथा गानं तथा तानं । यथा रागं तथा स्वरं ॥ यथा मूर्छितमेतस्या । वत्सराजः समादिशत् ॥ ७९ ॥ अचिरेणैव गंधर्व—कलायाः पारदृश्वरीं ॥ तां वीक्ष्य मेने वत्सेशः । स्वस्मादपि सुमेधसं ॥ ८० ॥ अयं ध्वनिरियं प्रज्ञा । त्वयाऽस्याश्चेदसृज्यत ॥ अकारि तत्किमेकाक्षी—त्युपालब्ध स वेधसं ॥ ८१ ॥ तां कलां पश्यतस्तस्याः । स्मृत्वा राज्ञश्च तद्वचः ॥ उन्मीलंति निमीलंति । वत्सेशस्य मनोरथाः ॥ ८२ ॥ अथास्याः श्रवणद्वारे । प्रविश्योदयनश्वरः ॥ जहार चौरवच्चित्तं । राजन्वत्यामपि क्षितौ ॥

॥ ८४ ॥

॥ ८३ ॥ हृतचित्ततयाऽत्यंतं । तस्य वीक्षणकांक्षिणी ॥ सातिविस्वरमध्यैष्ट । नष्टे स्यात्किं न चेतसि ॥ ८४ ॥ स विस्वरमधीयाना—मेनां चुक्रोश कोपतः ॥ आः काणे सर्वशून्यासि । यत् शिक्षा कुरुषेऽन्यथा ॥८५॥ सा साक्षेपमधिक्षिप्ता । चुकोप च जजल्प च ॥ आः कुष्टिन् निष्ठुरालापा—न्नात्मानं वेत्सि कुत्सित ॥ ८६ ॥

वत्सराजस्ततो दध्यौ । कथं कुष्टीति जल्पते ॥ ज्ञातं यादृगहं कुष्टी । काणेयमपि तादृशी ॥ ८७ ॥ झटित्येव पटीं यात्र—दयमुत्क्षिप्य वीक्षते ॥ तावद्ददर्श तां फुल्ल—नेत्रनीलोत्पलद्वयीं ॥ ८८ ॥ तामुद्वीक्ष्य विशालाक्षीं । स नृम्यको व्यतर्कयत् ॥ किं रतिः किमियं लक्ष्मीः । किं शची किं नु रोहिणी ॥ ८९ ॥ अत्यर्थमर्थये नेत्रे । द्रुतमुत्क्षिप्य पक्ष्मणी ॥ एतस्या रूपपीयूषं । पिबतं निर्भृतं युवां ॥ ९० ॥ अस्याः काणत्वमाकर्ण्य । मनस्त्वमासीत्कूणितं ॥ नवान्निलापकल्लोलैः । संप्रत्यस्यां प्रसृत्वरं ॥ ९१ ॥ प्रद्योतजापि तं वीक्ष्य । चिंतयामास विस्मिता ॥ आदिष्टमन्यथा पित्रा । चक्षुर्भ्यामन्यदीक्ष्यते ॥ ९२ ॥ वेधसा रत्नसेनास्य । कायात्सायोपजीवनात् ॥ नूनं निर्मिमिरे चंद्र—महेंद्रमदनादयः ॥ ९३ ॥ सैव चू-

ग्रामणिः स्त्रीणां । पुष्पास्त्रः शस्त्रवांस्तया ॥ तयोदग्रं तपस्तप्तं । या प्रियाऽस्य भविष्यति ॥
॥ ९४ ॥ मम भूयादयं प्रेयान् । नेयमिछापि मेऽर्हति ॥ दरिद्रः किमु कल्पद्रु–मिछन्नप्यधि-
गछति ॥ ९५ ॥
नाऽस्यांकपंकजे हंसीं । मां तातोऽपि चिकीर्षति ॥ कुष्टीति व्यपदेशेन । कुतोऽसौ नि-
ह्नुतेऽन्यथा ॥ ९६ ॥ अन्योऽन्यालोकनोद्भूत–तदेकध्यानयोस्तयोः ॥ आगात्कांचनमालेति ।
राजपुत्र्याः प्रिया सखी ॥ ९७ ॥ तौ विलोक्य तथावस्थौ । सा निश्चित्य विचक्षणा ॥ ज-
दन्नूनमन्योऽन्य–मनयोः प्रेम निर्भरं ॥ ९८ ॥ सलज्जौ प्रेमयुक्तौ च । तौ विदित्वा च साऽव-
दत् ॥ अहो वां किमियं लज्जा । किं वाऽऽकारस्य गूहनं ॥ ९९ ॥ इदं गुह्यमगुह्यं वा । परे न
पुनरात्मनि ॥ अनिह्नुतव्यं गोप्याह–मात्मैव युवयोः पुनः ॥ १०० ॥ ममोपयाचितैरेष । जज्ञे
वां प्रेमसंक्रमः ॥ योग्योऽयं युवयोर्जाया–द्योगो विष्णुश्रियोरिव ॥ १ ॥ तदिष्टं विदितप्रे-
म्णो–स्तयोः कांचनमालया ॥ सुखोत्कर्षेण कौमारो–चितानि दिवसान्ययुः ॥ २ ॥ अथोदय-
नमाहूय । चंद्रप्रद्योतभूपतिः ॥ निवेश्यार्धासने प्रीत्या । सगौरवमवोचत ॥ ३ ॥ इहास्ति ह-


॥ ८६ ॥

स्तिरत्नं मे । नाम्नाऽनिलगिरिर्बली ॥ यद्गर्जितजितो मन्ये । दिवमैरावणो ययौ ॥ ४ ॥ एत-
दीयमदासार—सारिणीवारिसेकतः ॥ इयं मदीयराज्यश्री—वल्लिः पल्लविताधिकं ॥ ५ ॥
अकस्मादेव पूर्वेद्यु—रुद्दामोद्भ्रमराकृतिः ॥ स स्वालानमहास्तंभं । वभंजांभोजनालवत् ॥
॥ ६ ॥ सितांकुशविहस्तैक—हस्ता हस्तिपकास्ततः ॥ तमानुपूर्व्या सर्वेऽपि । झगित्यारुरुहु-
र्मुहुः ॥ ७ ॥ अलब्धासनसंबधा—स्तेनाऽह्नाय विधूनिताः ॥ यंत्रक्षिप्ता इवाश्मानः । पेतुस्ते
दूरतः क्षितौ ॥ ८ ॥ हतोऽपि प्रसभं वीरै—र्डुतमाराक्निरारिकैः ॥ अवंतीमुपद्रुद्राव । सिंधुरः
स मदोद्धुरः ॥ ९ ॥ सर्वैः सर्वप्रकारेण । प्रतिकारपुरस्सरैः ॥ न व्यावर्त्तयितुं चक्रे । लक्षसं-
ख्यैरुपक्रमैः ॥ १० ॥ स पण्यां विपणिश्रेणि—मुच्चां सौधपद्धतिं ॥ काननं कमनीयं च । द-
लयामास स क्षणात् ॥ ११ ॥ परमौजस्विगर्जाभि—र्मदेभानपि भापयन् ॥ विंध्योपांतव-
नांतानां । स स्मरन् निर्ययौ पुरात् ॥ १२ ॥ व्यावर्त्तितो यदा नैषः । कृतैरौपयिकैरपि ॥ नि-
राशमनसः काम । प्रत्यावृत्तास्ततो वयं ॥ १३ ॥ मदीयो राजवर्गस्तु । निस्तुषस्नेहमोहितः
॥ कुर्वन् पटूनि चाटूनि । तमद्याप्यनुवर्त्तते ॥ १४ ॥

एतस्य हस्तिमल्लस्य । मल्लीशुभ्रगुणस्पृशः ॥ वियोगजनितोद्वेगै–रस्माभिर्धैर्यमुज्झितं
॥ १५ ॥ विनाऽनेन निरालंबं । राज्यं मन्यामहे वयं ॥ प्रासादोऽपि पतत्येव । मूलस्तंभं वि-
ना क्षितौ ॥ १६ ॥ प्रत्यमात्यं प्रतिप्राज्ञं । प्रतिस्त्रि प्रतिपूरुषं ॥ तस्य व्यावर्त्तनोपायान् । पृ-
च्छामिस्म समुत्सुकः ॥ १७ ॥ सर्वेषां परमत्रार्थे । राजन् नौजस्विनां मतिः॥ किं खद्योता-
दयो नेतुं । तमिस्रं नैशमीशते ॥ १८ ॥ किं चाऽभयकुमाराख्यो । मंत्री श्रेणिकभूपतेः ॥
बलच्छलाभ्यामस्माभि–रिहानीतोऽस्ति संप्रति ॥ १९ ॥ अतीवतीव्रप्रतिभो । निःकारेऽप्युप-
कारवान् ॥ सोऽपि सेवागतोऽस्माभि–रेनमर्थमपृच्छयत ॥ २० ॥ ततो विमृश्य तेनोक्त–मवं-
तीश निशम्यतां ॥ राजात्र वत्सराजोऽस्ति । युष्मन्मूर्त्यंतरं हि यः ॥ २१ ॥ सोऽस्य दंताव-
लस्याग्रे । विदध्यादुपवीणनं ॥ नादानुगः स्वयमयं । येनालानाय नीयते ॥ २२ ॥ गदेऽस्मि-
न्नगदंकारं । तत्त्वामत्यर्थमर्थये ॥ वीणानादविनोदेन । वनादानय दंतिनं ॥ २३ ॥
तेनेति प्रणयात्प्रोक्तः । परोपकृतिलंपटः ॥ ऊचे वत्सेश्वरो राजन् । विधातास्मि तव
प्रियं ॥ २४ ॥ किंतु भद्रवतीपृष्ट–मधिष्ठाय मया समं ॥ विज्ञा वासवदत्तापि । विधत्तामुप-

वीणनं ॥ २५ ॥ तथेत्युज्जायिनीनाथ. । प्रतिश्रुत्य बहुश्रुतः ॥ वत्सां वासवदत्तां च । प्रजि-
घाय सहामुना ॥ २६ ॥ अथेश्वरस्य कौशांब्याः । प्रस्थानसमये तदा ॥ पुमाननलगिरेः पा-
र्श्वा–दुत्सुकः कोऽप्युपाययौ ॥ २७ ॥ सोऽत्र व्यज्ञपयद्राजन् । गजोऽयं मददुर्धरः ॥ वप्रके-
लिं वने नद्या–स्तीरेषु तनुतेऽधुना ॥ २८ ॥ हशापि हि महामात्य–प्रभृतीन् मदसंभृतः ॥
कुस्वामीव गतापेक्षो । नेक्षते राज्यसेवकान् ॥ २९ ॥ प्रद्योतन ततस्तस्मिन् । दिष्टे मार्गे
गजंप्रति ॥ वशारूढोऽचलद्वत्स–राजो राजसुतान्वितः ॥ ३० ॥ क्रमात्तं देशमासाद्य । राजा
राजन्यजापि च ॥ गीतस्याऽनवगीतस्य । रहस्यं तनुतस्तदा ॥ ३१ ॥

अवीवदच्च प्रावीण्या–द्वीणामुदयनस्तथा ॥ यथा स तस्थावुग्रोऽपि । ग्रावोत्कीर्ण इव
द्विपः ॥ ३२ ॥ अयस्कात इवानदी । घोषो घोषवतीभवः ॥ अयस्पिंडमिवाकर्ष–त्तं वारण-
शिरोमणिं ॥ ३३ ॥ उल्लंघ्य दूरमध्वानं । विपंचीध्वनिनाऽमुना ॥ पोतः सुपवनेनेव । स्वां
पुरीमाययौ गजः ॥ ३४ ॥ उच्चलद्वल्लकीनाद–नव्यांकुशवशंवदः ॥ एत्य स्तंभमवष्टंभ । त-
स्थौ स्वस्थः स कुंजरः ॥ ३५ ॥ उद्दामगुणपुण्यश्री–वसंतोऽथ वसंतकः ॥ भद्रवत्या महा-

मात्रो । वत्सराजं व्यजिज्ञपत् । ३६ । धात्रीधव तवालापैः । कलापैरिव केकिनः ॥ अतिचित्रै-
रतिस्निग्धै-रधमर्णोऽस्मि निर्मितः ॥३७॥ द्वित्र्यहोरात्रमितस्य । जनस्यास्य कदाचन ॥ व्या-
पार्यास्तनुले कार्ये । प्राणाः स्वामिन्निमे त्वया ॥ ३९ ॥ स्वस्थानमधुना गंतु-मादेशं देहि
मे प्रभो ॥ इति वत्सेशमापृछ्य । स्वावासेऽगाद्वसंतकः ॥ ४० ॥ तस्यां गंधर्वशालायां । यु-
क्तिगुप्तिगृहे स्थितः ॥ सप्रेम वत्सराजोऽपि । राजपुत्रीमपाठयत् ॥ ४१ ॥ दूरे समस्तमप्य-
न्य-न्नक्रेमालापतोऽपि तं ॥ तदव्यनंदत्प्रद्योत-स्तेन सोऽजनि दुर्मनाः ॥ ४२ ॥
स दध्यौ भ्रमरश्यामा । प्रद्योतस्य मुखद्युतिः ॥ अनेनाप्यवदातेन । दृश्यतेऽसौ यदी-
दृशी ॥ ४३ ॥ तन्मन्ये मन्युजननीं । वहत्येष विपक्रतां ॥ नीलोत्पलं विना न स्या-न्नील-
ता स्फटिकोपले ॥४४॥ न मे वासवदत्ताया । अनुरागोऽस्य संमतः ॥ एतेन मम काणेति क-
थितेयं किमन्यथा ॥ ४५ ॥ यावदेतस्य नोदेति । शत्रुत्वावोचिता मतिः ॥ तावत्केनाप्युपाये-
न । स्वदेशंप्रति गम्यते ॥ ४६ ॥ तदेदं चिंतयन्नेष । जल्पितो राजकन्यया ॥ आश्चर्यमार्यपु-
त्रेदं । गवाक्षेण निरीक्ष्यतां ॥ ४७ ॥ असौ कुवेषो वर्षीयान् । उन्मत्तो नृत्यति द्विजः ॥ स्वैः-

रं गायति गीतं च । वैपरीत्यमदो विधे. ॥ ४८ ॥ ऊर्ध्वमालोकयन्नावां । कथमश्रूणि मुंच-
ति ॥ गीतनृत्यवदेषापि । काऽप्यस्योन्मत्तता नवा ॥ ४९ ॥ अथ पृथ्वीपतिस्तस्या । वाक्या-
दालोक्य तं द्विजं ॥ चिंतयामास किमसौ । न स्याद्यौगंधरायणः ॥ ५० ॥ येनाऽन्नवद्विप-
त्पंक–मग्न मामस्य पश्यतः ॥ स्वच्छंदमुच्छलद्बाष्प–पिच्छलं नेत्रयुग्मकं ॥ ५१ ॥ तातवत्सल-
मालोक्य । चिरकालान्ममाप्यमु ॥ उत्कंठामांसलैः कंठो । बाष्पपूरैरपूर्यत ॥ ५२ ॥ इति चिं-
तापरे राज्ञि । सोऽग्रजन्माऽग्रतो ययौ ॥ चित्रैकपात्रमेकत्र । दृश्यंते तादृशाः कुतः ॥ ५३ ॥
प्रविश्य तस्या शालाया–मुत्कण्ठान्तरनिर्भरः ॥ सोऽकस्माद्वत्सराजस्य । तस्थौ बद्धांजलिः पुरः
॥ ५४ ॥ आनंदान्नयनांभोज–भृंगारमुखनिर्गतैः ॥ अभ्यषिंचदिवाम्भोभिः । स भृशं भक्ति-
वल्लरीं ॥ ५५ ॥ नरनाथस्तदालिंग्य । बभाषे बाष्पनिर्भरः ॥ मंत्रीश कुशलं राज्ये । तस्य
धूः कस्य चार्पिता ॥ ५६ ॥ कथमाक्रम्य पंथान–मियतीं भुवमागतः ॥ कथं चात्र प्रविष्टोऽ-
सि । वेष्टितेऽत्र पदातिभिः ॥ ५७ ॥
इति पृष्टो रहस्याख्यात् । सर्वं यौगंधरायणः ॥ तदा बद्धीकृतो देव–श्चिरेणाऽज्ञायि से-

 ॥ ९३॥

नया ॥ ५८ ॥ साथ क्रोधादथाविष्ट । दुष्टनिग्रहकाम्यया॥ परं देव न कुत्रापि। शत्रुसैन्यमुदे-
क्षत ॥ ५९ ॥ ततः सेनाऽप्यसेना सा । त्वामनासेदुषी प्रभो ॥ लज्जानम्रमुखी रात्रौ । रा-
जधानीमुपाययौ ॥ ६० ॥ आवेदितेऽत्र वृत्तांते । तया वाष्पायमाणया ॥ सर्वास्यामपि कौ-
शांब्यां । शोकाऽद्वैतमजायत ॥ ६१ ॥ अहं तं मोहं संहृत्य । सेनापतिमभाषिषं ॥ दंभेश
युज्यते शोको । लोकवन्नावयोरथ ॥ ६२ ॥ तत्त्वं राजधुरं धेहि । येन स्वामिनमानये ॥ वि-
नीतः सोऽपि सेनानी-स्तथेति प्रतिपन्नवान् ॥ ६३ ॥ प्राग्दत्ताः सिद्धपुत्रेण । चिंतातिशय-
शालिनीः ॥ आदाय गुटिकाः काश्चि-दथ प्रस्थितवानहं ॥ ६४ ॥ भीमपल्लीमथागत्य । प-
ल्लींद्रं दृष्टवानहं ॥ मत्तो विदितवृत्तांतः । सोऽपि खेदं समासदत् ॥ ६५ ॥ स स्मरन्निखिलां
युष्म-द्गोत्रमैत्रीं पुरातनीं ॥ त्वत्कार्ये यत्नवानेवं । संकेतं ग्राहितो मया ॥ ६६ ॥ आगच्छंतं
पथानेन । वत्सेश्वरनरेश्वरं ॥ अज्ञाय प्रतिगृह्णीयाः । संमुखः सपरिच्छदः ॥ ६७ ॥ एवं तमा-
त्तसंकेतं । कृत्वात्र द्रुतमागमं ॥ इह हि ग्रहिलीभूय । प्रतिचत्वरमभ्रमं ॥ ६८ ॥ केनाप्यहं
न लक्ष्येयं । येन भ्राम्यं निरर्गलं ॥ कुत्रापि त्वां च पश्येय-मिति ध्यानपरोऽभ्रमं ॥ ६९ ॥

त्वामुद्वीक्ष्य विभो दुष्ट–पदातिपरिवेष्टितं ॥ धैर्यसेतुन्निदोऽभूवन् । मम नेत्रजलोर्मयः ॥७०॥
ततस्तेतिक्रमागंतु–मदृशीकारकारणं ॥ तदैव गुटिकामेकां । मुखांतः क्षिप्तवानहं ॥ ७१ ॥
प्रज्ञाप्रवैज्ञवादस्या । देव त्वदपरो जनः ॥ विलोकते न मे रूपं । शृणोति न च मे वचः ॥
॥ ७२ ॥ यथैवाहमिहायातः । केनचिन्न च वीक्षितः ॥ तथा देव त्वमागच्छ । संतु वत्साः स-
दोत्सवाः ॥ ७३ ॥ अथोदात्तां नृपो वाच–मुवाच सचिवोत्तम ॥ विधुरात्प्रभुमुद्धर्तुं । त्वयि धौ-
रेयता स्थिता ॥ ७४ ॥ उल्लंघयामि नो वाचं । शक्तिभक्तिमतस्तव ॥ किंत्वियं वत्सराजाय
। वचोयुक्तिर्न रोचते ॥ ७५ ॥ यस्य मे त्वादृशो मंत्री । वाचस्पतिविजित्वरः ॥ यस्य मे
दुर्जयानीकः । शतानीको नृपः पिता ॥ ७६ ॥ यस्य मेऽनुपमेयश्री–र्माता देवी मृगावती
॥ पलाय्य तस्य मे यानं । मंत्रिराज त्रपाकरं ॥ ७७ ॥ युग्मं ॥ राज्यसर्वस्वमाच्छिद्य । प्रद्यो-
तस्य सुतामिमां ॥ पश्यतोऽस्यैवनेतास्मि । चेन्मां तत्ते मतिर्मतिः ॥७८॥ घनस्नेहा समागत्य ।
यदियं राजपुत्र्यपि ॥ मम राज्यश्रियोऽजस्रं । सपत्नीत्वं चिकीर्षति ॥ ७९ ॥ सखी कांचन-
मालाख्या । तस्या मूर्त्तमनोरथा ॥ भवत्सार्थे समागंता । स्वामिनीसहगामिनी ॥ ८० ॥

किंचास्त्यत्र महामात्रो । भद्रवत्या वसंतकः ॥ सोऽपि निस्सीममस्मासु । दाक्षिण्यमनुरु-
ध्यते ॥ ८१ ॥ ततस्तवोपपायस्य । प्रतापस्येव मे ध्रुवं ॥ अस्त्येष विषयो योग्यः । संस्कार-
स्येव सन्मणिः ॥ ८२ ॥ ततो भद्रवतीस्कंध—मधिरुह्य निराधयः ॥ विविधायुधसंनद्धा । ग-
ग्रामः सपरिच्छदाः ॥ ८३ ॥ तन्मंत्रिन् पंचरात्रेण । सर्वमर्थं समर्थय ॥ कार्येऽस्मिन्न सहका-
रिणः । संतु नः कुलदेवताः ॥ ८४ ॥
इत्युक्तः सचिवोत्तंसः । शीघ्रं यातो गृहाद्बहिः ॥ पुनराहृतहृदयत्व—मुन्मत्तीभावमन्व-
भूत् ॥ ८५ ॥ सिंहद्वारमथागत्य । सुश्लोकः श्लोकमीदृशं ॥ चंडप्रद्योतभूपस्य । पश्यतः प-
ठतिस्म सः ॥ ८६ ॥ यदि तां चैव तां चैव । तां चैवायतलोचनां ॥ न हरामि नृपस्यार्थे ।
नाहं यौगंधरायणः ॥ ८७ ॥ तत्र श्रोत्रातिथौ याते । कोपात्पाटलपाटले ॥ नृपश्चिक्षेप सा-
क्षेप—श्चक्षुषी ग्रहिलंप्रति ॥ ८८ ॥ ततः स कपटोन्मत्तो । नृत्यन्नूर्ध्वंदमः क्षितौ ॥ क्ष्माप-
तेर्वीक्ष्यमाणस्य । मूत्रयामास सन्मुखः ॥ ८९ ॥ पूर्वश्लोकं पुनर्गायन् । निर्विलंबदिगंबरः ॥
तत्र मूत्रार्द्रपंकांके । क्षोणीपीठे लुलोठ च ॥ ९० ॥ कोऽप्येष वातकी वृद्धो—ऽस्रवायं च पि-

शाचक्री ॥ निश्चित्येति तमैक्षिष्ट । क्षोणीपतिरवज्ञया ॥ ९१ ॥ मायाऽपस्मारिणा तेन । ततो गत्वा वसंतकं ॥ निवेद्योदयनप्रोक्तं । तत्कार्याय प्रवर्त्तितः ॥ ९२ ॥ कार्यं तन्मुदितः कर्तु-मारेभेऽथ वसंतकः ॥ प्रतिपन्नस्य निर्वाहे । सावधाना हि साधवः ॥ ९३ ॥ राजवर्गः समग्रोऽपि । व्यपदेशेन केनचित् ॥ नीतस्तेन नयज्ञेन । मद्यदानात्प्रमत्ततां ॥ ९४ ॥ ततो न्नभ्यर्ती न्नड-मिच्छन्नुदयनंप्रति ॥ नानायुधादिसामग्र्या । यात्रायोग्यामसौ व्यधात् ॥ ९५ ॥ घटीश्चतस्रः संस्थाप्य । तन्मूत्रपरिपूरिताः ॥ करेणुं निविमां चक्रे । कक्षाबंधवतंसकः ॥ ९६ ॥ कक्षाबंधप्रबंधे च । रसितं वितताम सा ॥ संजायंते निमित्तानि । न्नावाऽन्नावानुसारतः ॥ ॥ ९७ ॥ तत्रांधः सनिधौ कश्चि-दनंधश्चेतसा पुनः ॥ निमित्तवेत्ता तत् श्रुत्वा । पपाठ श्लोकमीदृशं ॥ ९८ ॥ कक्षायां बध्यमानायां । तथा रसति हस्तिनी ॥ योजनानां शतं गत्वा । प्राणत्यागं करिष्यति ॥ ९९ ॥

ततो विधाय सामग्री-मागत्याऽमात्यपुंगवः ॥ उदंतं कथयामास । राजानं रजनीमुखे ॥ १०० ॥ निर्व्याजं व्याजहाराथ । राजा राजसुतांप्रति ॥ वचो मे श्रूयतामेक-मेकता-

नं मनः कुरु ॥ १ ॥ प्रातः संप्रत्यमात्यो मां । कौशांबीं नेतुमुत्सुकः ॥ तज्जातास्मि विधाता-
स्मि । वत्सानामुत्सवं चिरात् ॥ २ ॥ वांछा वत्साधिपे ह्यस्ति । यदि ते मदिरेक्षणे ॥ तदुत्ति-
ष्ठ प्रतिष्ठस्व । संप्रत्येव मया समं ॥ ३ ॥ तदाकर्ण्य प्रसन्नास्य—द्युतिः प्रद्योतनंदिनी ॥ अ-
न्नूदग्रेसरी राज्ञः । समं कांचनमालया ॥ ४ ॥ नृपोऽथ सपरीवारः । कृत्वा घोषवतीं करे ॥
आरुह्य करिणीमुच्चै—रिदं राजपथेऽपठत् ॥ ५ ॥ एषः प्रयाति सार्थः । कांचनमाला वसंत-
कश्चैव । घोषवतीभद्रवत्यौ । वासवदत्ता उदयनश्च ॥ ६ ॥ विदिते तत्र वृत्तांते । क्रुद्धः प्रद्यो-
तन्नृपतिः ॥ सुतौ गोपालपालाख्यौ ॥ समाहूय समादिशत् ॥ ७ ॥ बलात्पलाय्य गच्छंतं ।
वत्सराजमुदायुधौ ॥ युवां नलगिरिस्कंध—मधिरुह्यानुगच्छतं ॥ ८ ॥ सुता वासवदत्तापि । तेन
नीता दुरात्मना ॥ अस्या व्यावर्त्तने यत्नं । कुर्वीयाथां यथा तथा ॥ ए ॥ संगतो मे न जा-
माता । लोकंपृणगुणोऽप्ययं ॥ अस्य पक्षो विपक्षो नः । परंपरपराकृतः ॥ १० ॥
इति तातसमादिष्टौ । दृढं संवर्मितावुभौ ॥ गजमात्रपरीवारौ । कुमारौ तावधावतां ॥
॥ ११ ॥ भद्रवत्यामतीतायां । पंचविंशतियोजनीं ॥ मदामोदमथाघ्राय । जल्पतिस्म वसंत-

चरित्रं ॥ ए६॥

कः ॥ १२ ॥ गजराजो महाराज । पश्चादायाति वेगतः ॥ लुप्तसप्तच्छदोन्मादो। मदामोदो व-
दत्ययं ॥ १३ ॥ करेणोर्द्विगुण याति । जंघालोऽयं महागजः ॥ तस्मिन्नेवं वदत्येव । स च-
क्षुर्लक्ष्यतामगात् ॥ १४ ॥ ततो राजसुताऽवादी–दार्यपुत्र ममाग्रजौ ॥ अधिरुह्यैनमायातौ ।
त्वदनुपदिकाविमौ ॥ १५ ॥ हेतुं पत्यहिते ह्यस्मिन् । धिग्मामकृत्रकारिणीं ॥ सह्यौ सह्योन्न-
तस्कधौ । यदेतौ केन संप्रति ॥ १६ ॥ ततोऽन्यधत्त नूपाल–स्तामुदात्तमतिस्तदा ॥ राजपुत्रि
त्रपाकारि । कथमीदृगुदीर्यते ॥ १७ ॥ वल्लकीवादने पूर्वं । विलोकय लघुहस्ततां ॥ अधुना
मम युद्धे तु । तामेतामवलोकय ॥ १८ ॥

इति जल्पतमेवैत । कुमारौ तावबोचतां ॥ चौर स्वसारमस्माक–मपहृत्य क्व गच्छसि
॥ १९ ॥ तत्तिष्ठ शस्त्रमादत्स्व । यदि शौंडीर्यमस्ति ते ॥ पीतं पलायमानस्य । नावयोर्विशिखै-
रसृक् ॥ २० ॥ ताभ्यामधिज्यचापाभ्यां । वाक्यैरेवमरुंतुदैः ॥ कुपितो धृतधन्वासौ । प्रहर्त्तु-
मुपचक्रमे ॥ २१ ॥ तयोर्मनोरथैः सार्द्धं । धनुर्वेदधनंजयः ॥ बाणश्रेणिमसौ चंचै–र्निजकां-
डैरखंडयत् ॥ २२ ॥ स गोपालं च पालं च । बाणछेदत्रिपादिनं ॥ निर्ममे निजधन्वोच्चै–र्मा-

गैर्मर्ममार्गणैः ॥ २३ ॥ विलक्षवदनौ वीक्ष्य । तौ कुमारौ वसंतकः ॥ अस्फोटयद्धटीमेकां । करिणीं चाप्यनुनुदत् ॥ २४ ॥ लग्नो नलगिरिस्तत्र । मूत्रसंचयपंकिले ॥ प्रसह्य प्रेर्यमाणोऽपि । न पुरः पदमप्यगात् ॥ २५ ॥ जवाच पालं गोपाल–स्ततो विज्ञाय तद्बलं ॥ जेतुमिंडोऽपि नो वत्स । श्रीवत्सेश्वरमीश्वरः ।२६। एतस्योच्छेत्तुमुत्संगा–त्तन्वंगीं किल कः प्रभुः॥ सिंहीं सिंहांकपालीतः । केनापि किमु गृह्यते ॥ २७ ॥ किं चासौ जाग्यवानार्यो । विनयी विक्रमी क्रमी ॥ सत्वी च तदसौ वत्स । स्वसुर्नः प्रवरो वरः ॥ २८ ॥ अलं तदग्रतो गत्वा । वत्स व्यावर्त्यतेऽधुना ॥ तथा च कार्यं येनाय–मर्थस्ताताय रोचते ॥ २९ ॥

आर्यः प्रमाणमर्थेऽस्मि–न्नार्येण परवानहं ॥ इति व्यज्ञपयत्पाल–नुदारः सोदरंप्रति ॥ ॥ ३० ॥ क्रमादवंतीमागत्य । ततस्तौ तातचेतसि ॥ स्थापयामासतुः सर्व–मर्थमेनं मनोगतं ॥ ३१ ॥ कियत्यपि व्यतीतेऽथ । घटीं पथि वसंतकः ॥ द्वितीयां स्फोटयामास । करिप्रतिजयात्स्वयं ॥ ३२ ॥ इत्थं तृतीयां तुर्यां च । चिक्षेप स घटीं क्षितौ ॥ शतयोजनमध्वानं । सा च जवत्वती ययौ ॥ ३३ ॥ अत्रांतरे करेणुः सा । मार्गखेदाद्व्यपद्यत ॥ निमित्तानि नि-

मित्तङ्गै-रादिष्टानि हि नान्यथा ॥३४॥ तस्यां पतित्वा सुप्तायां । करेणौ तत्र कानने ॥ मार्ग-
चिंता जजागार । जगतीशस्य चेतसि ॥ ३५ ॥ वसंतकश्च मंत्री च । समयज्ञावुन्नावपि ॥
परिचर्याकृते राज्ञ-स्तं पल्लीऽमुपेयतुः ॥ ३६ ॥ नृपो वासवदत्ता च । समं कांचनमालया ॥
दुःखार्त्तौ स्म प्रवर्त्तेते । पद्भ्या गंतुं ततोऽग्रतः ॥ ३७ ॥ अटव्यं च महाटव्यां । विरहो वा-
हनेन च ॥ द्वयमेकपदे तेषां । श्रमाय समजायत ॥ ३८ ॥ स्वस्य बंधः स नूनर्चु-र्विदधे
न तथा व्यथां ॥ यथा वासवदत्तायाः । पादचारस्तदातनः ॥ ३९ ॥ इतस्ते विषमा नूमि-
रितस्ते कटकाः पुरः ॥ इतस्ते पन्नगास्तन्वि । पादं मुंचावधानतः ॥ ४० ॥ अयं गिरिर्दुरा-
रोहः । सरोरुहसहोदरौ ॥ तव पादौ च पद्माक्षि । भुजौ मे ह्यवलंब्यतां ॥ ४१ ॥ अनवद्या-
नने नद्या । हृदयद्वयगं पयः ॥ डुस्तर च ततो न्नीरु । मम स्कंधेऽधिरुह्यतां ॥ ४२ ॥ इत्थं
वासवदत्ताया-श्चटुकारेण वर्त्मनि ॥ विदधे वत्सराजेन । परिचर्याविधिः स्वयं ॥ ४३ ॥ च-
तुर्भिः कलापकं ॥

चलनश्रमदुःखेन । तस्या नेत्राश्रुविंदवः ॥ मैत्र्यमासूत्रयामासु-र्बाष्पयुग्नृपनेत्रयोः ॥

॥ ४४ ॥ तपनातपसंतप्त—मास्यमस्या विलोकयन् ॥ दध्रे धात्रीपतिर्दोर्भ्यां । दुकूलातपवा-
रणं ॥ ४५ ॥ विस्तार्य पटमाधाय । धनुर्दंडमधः परं ॥ घर्मे तस्या निषण्णोऽग्रे । व्यधात्पट-
कुटीं नृपः ॥ ४६ ॥ वपुस्तस्याः श्रमोद्भेदि—स्वेदाम्भोबिंदुदंतुरं ॥ प्रमृज्य वीजयांचक्रे । स
स्वचीनांशुकांचलैः ॥ ४७ ॥ तस्याः पथपरिश्रांतिं । क्लेशतोऽपानयन्नृपः ॥ प्रेमावलोकितैः
पत्यु—रक्लेशेनैव सा पुनः ॥ ४८ ॥ स्वयमानीय पानीयं । कृत्वा पुटकिनीपुटं ॥ तृष्णां मु-
मोचयत्यसौ तस्याः । क्षणेनैव क्षितीश्वर ॥ ४९ ॥ ततो दत्वा करालंब—मंबरव्यापिभिर्द्रुमैः ॥
गयाभिरामं साऽऽरामं । तां निनाय नरेश्वरः ॥ ५० ॥ नृपतिः स्वयमानीतैः । परिणामम-
नोरमैः ॥ आश्वस्तां तां फलैस्तत्र । प्राणवृत्तिमकारयत् ॥ ५१ ॥ साऽवनीपतिविन्यस्त—प-
ल्लवस्रस्तरस्थिता ॥ रविक्रांतनभोमध्यं । मध्यंदिनमलंघयत् ॥ ५२ ॥ अतिदीर्घद्रुमच्छाये ।
जाते पश्चिमवासरे ॥ कियंतमपि पंथानं । लंघयामास सा पुनः ॥ ५३ ॥ एतां तीव्रातपक्लां-
तां । विभाव्येव नभोमणिः ॥ एकछायं तदा विश्व—मनुक्रोशादिवादधौ ॥ ५४ ॥ एतां संता-
प्य मृदंगीं । किरणैरुष्णमुकैरिव ॥ अपत्रपिष्णुरुष्णांशु—र्गतोऽस्तरयमदृश्यतां ॥ ५५ ॥ तस्याः

कांतारसंचार–व्यसनप्रभकाम्यया ॥ मन्येंधकारितमुखा–स्तदानीं मिलिता दिशः ॥ ५६ ॥
मार्गश्रमक्कमादूत–निद्रामिलितलोचनां ॥ नृपो निजांकपल्यंके । राजपुत्रीमसूषुपत् ॥५७॥
सरोजसुकुमालाभ्यां । कराभ्यां तदभिज्ञया ॥ अंह्रिसंवाहनं चक्रे । तस्याः कांचनमालया ॥
॥ ५८ ॥ इयं हि सहते क्लेशान् । मत्कृतानिति चिंतया ॥ श्लिष्टोऽयमिति सेर्ष्येव । न नि-
द्रा नृपमभ्यगात् ॥ ५९ ॥ तस्या मृगदृशो रक्षा–जागरूकस्य भूपतेः ॥ अनल्पैरेव संकल्पै
–र्विनिर्गतास्म विभावरी ॥ ६० ॥ भद्रे पांथासि तन्निद्रां । सत्वरं मुच्यतामिति ॥ शंसंतश्च-
क्रिरे तारं । शब्दान् शके शकुंतयः ॥ ६१ ॥ तस्याः श्रमजुषः शंके । करालंबनहेतवे ॥ क-
रान् प्रसारयामास । लोकबंधुर्दिनेश्वरः ॥ ६२ ॥
ततः सा मंदमुत्थाय । चचाल पदचारतः ॥ कोह्यदृष्टसमादिष्टां । वर्त्तनीमतिवर्त्तते ॥
॥ ६३ ॥ तदा पादाः सहस्रांशो–रायतंते यथा यथा ॥ क्रमात्प्रद्योतदुहितु–र्मंदीयंते तथा त-
था ॥ ६४ ॥ तरुणे तरणौ याव–त्ते सर्वे विश्रमार्थिनः ॥ साकांक्षं चिक्षिपुश्चक्षुः । प्रतिवृक्षं
प्रतिक्षणं ॥ ६५ ॥ पुरो भयंकरां ताव–त्ते ढक्कामुपशुश्रुवुः ॥ साक्षाच्चक्रुश्च सन्नद्ध–मुद्धतां

शावरीं चमुं ॥ ६६ ॥ अथ प्रद्योतदुहिता । नीताऽनाषत नूपतिं ॥ एतैः पुरस्तादस्तोकै—रु-
द्धोऽध्वा पश्य दस्युनिः ॥ ६७ ॥ अयं नो निःसहांगानां । धिगनर्थः पुनः पुनः ॥ अथवा मं-
दन्नाग्याना—मापदः स्युः पदे पदे ॥ ६८ ॥ अद्य वत्सेश्वरोऽजल्प—त्कमलाक्षि किमाकुला ॥
कुरंगारिः कुरंगाणा—मंतकृन्नूयसामपि ॥ ६९ ॥

अस्तु मे स्मर्यमाणाथ । शिवदा हि मृगावती ॥ इति मंत्रं स्मरेस्त्वं तु । येनेष्टफलमा-
प्स्यसि ॥७०॥ प्रियामित्थं व्यवस्थाप्य । निस्वानाह महीपतिः ॥ शृगालानामिवायं वः । कः
स्वरोज्जागरः पुरः ॥ ७१ ॥ यतो वराकः कंपेत । प्राकृतः पन्नगेक्षणे ॥ पत्युः पुनर्विहंगाना-
माहारः स मनोहरः ॥ ७२ ॥ प्रतिपक्षक्षमापाल—कुक्षिविक्षोददक्षिणाः ॥ प्रहरंतः पुलिंदे-
षु । त्रपंते मम पत्रिणः ॥ ७३ ॥ तस्करत्वात्पराधित्वा—द्वधबंधादिकारिणः ॥ नवंतो तेन
नायं मे । कोदंडः कुड्मलीकृतः ॥ ७४ ॥ इत्याक्षिप्तास्ततस्तेऽपि । जगदुर्जगतीपतिं ॥ गर्वं
सर्वंकषं कुर्वन् । कथं पांथ न लज्जसे ॥ ७५ ॥ वयं निंद्याः पुलिंदाः स्म—श्चक्रवर्त्ती नवान्
पुनः ॥ इदं हास्तिकमश्वीयं । परितस्तव दृश्यते ॥ ७६ ॥ वातूल तदितो याहि । निहतेना-

पि किं त्वया ॥ परतः कल्पवल्लीव । बह्वाकल्पास्ति यांगना ॥ ७७ ॥ रत्नाभरणमेतस्या । ग-
त्वा गृह्णीमहे वयं ॥ विजयेमहि माहात्म्यं । येन पुण्यजनेशितुः ॥ ७८ ॥ उदीर्यैवमनार्या-
स्ते । किंचिदुच्चावचस्पृहाः ॥ अनुस्मरंती तं मंत्रं । प्रधावंतिस्म तांप्रति ॥ ७९ ॥ महीपति-
रमूश्चक्रे । मार्गणैर्मृत्युगोचरान् ॥ महत्स्वापच्चिकीर्षा हि । सद्यः फलति पापिनां ॥ ८० ॥
पुलिंदध्वजिनी योद्धु–मारेभेऽभिमुखी ततः ॥ तेने तेन शरैः सापि । विहस्ता हस्तलाघवात् ॥
॥ ८१ ॥ ततो दवीयोदेशस्थ–मुपस्थाय चमूपतिं ॥ सा सर्वं कथयामास । तद्भौम्मीर्यविजृं-
भित ॥ ८२ ॥ सोऽप्याभरणलोभेन । भीमश्चौरचमूपतिः ॥ सन्नद्धः सायुधो धावन् । ददर्शो-
दयनं पुरः ॥ ८३ ॥ उपलक्ष्य सवैलक्ष्यः । समुत्तीर्य तुरंगमात् ॥ स भूमिलुठनैरेत्य । न्यप-
तन्नृपपादयोः ॥ ८४ ॥

तेन मंत्रप्रभावेण । कर्मणा च महीपतेः ॥ उभयेनाद्भुतेनासौ । राजपुत्री विसिस्मये ॥
॥ ८५ ॥ नृपेण पाणिना पृष्टे । स्पृष्टो हृष्टश्च सोंजसा ॥ पल्लीशो न्यगदद्देव । दुर्नयः क्षम्य-
तामयं ॥ ८६ ॥ क्षोणीवल्लभ भिल्लानां । भल्लूकानां च नांतरं ॥ उभयावपि बीभत्सौ ।

॥ १०३ ॥

इत्युक्ते तेन स-
डुःकर्माणावुन्नावपि ॥ ८७ ॥ किं च मे दत्तसंकेतः । कुत्र यौगंधरायणः ॥ किं त्वां
क्रोन्नो । नूपालः समन्नाषत ॥ ८८ ॥ वसंतकश्च मंत्री च । द्वावपि प्रहितौ पुरः ॥ तयोरपायसंकल्प–शंकाशंकुसमाकु-
नोपस्थिताविह्नं । व्याहृतो नेति सोऽब्रवीत् ॥ ८९ ॥ प्रन्नूतैः प्रान्नृतैस्तत्र । न्नक्त्या
लः ॥ पल्लींडेण निजां पल्लीं । निन्ये तेनावनीपतिः ॥ ९० ॥ पुरीपरीसराराम–
सत्कृत्य न्नूपतिः ॥ पल्लीशेनोपकौशांबीं । निर्विलंबमनीयत ॥ ९१ ॥ अथ प्रातः प्र-
सौधमध्यास्त पार्थिवः ॥ नित्यं वसंतकामात्यौ । तदीयहृदये पुनः ॥ ९२ ॥
तीहारः । प्रीतः क्ष्मापं व्यजिज्ञपत् ॥ अस्ति द्वारि नरद्वंद्व–युतो यौगंधरायणः ॥ ९३ ॥
शीघ्रं प्रवेशयेत्युक्तः । स तान् प्रावीविशत्ततः ॥ प्रणतस्तैर्नृपो हर्षा–दूचे मंत्रिवसंतकौ ॥
॥ ९४ ॥ अंतराले विलंबो वां । कथं को वा पुमानयं ॥ एवमाज्ञापितो मंत्री । स च राज्ञे
व्यजिज्ञपत् ॥ ९५ ॥ अस्य पल्लीपतेः स्वामिन् । स्वरूपज्ञापनोत्सुकः ॥ आगच्छंस्तुच्छवेषोऽ-
पि । मुषितोऽहं मलिम्लुचैः ॥ ९६ ॥ तथाप्यमुक्तवर्त्मानं । यात्रातो वलितस्तदा ॥ मामवं-
तीशसेनानी–र्दृष्टवान् सवसंतकं ॥ ९७ ॥

॥१०४॥

 

स वसंतकमात्मीयं । परकीयं च मां पुन.॥ मिलितौ द्वावपि प्रेक्ष्य । युक्तितः प्रोक्तवा-
निद ॥ ९८ ॥ विरुद्धद्वयसंयोगः । स्याद्यथाऽनर्थहेतवे ॥ तथा राजविरुद्धाय । संगतिर्वां वि-
रोधिनोः ॥ ९९ ॥ स एवमावामाक्षिप्य । नयलोलविलोचनौ ॥ गृहीत्वा तस्करग्राहं । च-
क्रे काराकुटुंबिनौ ॥ १०० ॥ अवंतीमेत्य सेनान्या । त्वत्स्वरूपं निशम्य च ॥ आस्थानस्थाय
तेनावां । प्रद्योतायोपदीकृतौ ॥ १ ॥ ततो जगाद प्रद्योतः । सेनाधीश ममाधिक ॥ आसीदु-
दयने क्रोध. । प्राणनिग्रहणावधिः ॥ ३ ॥ आज्ञ्यां किंतु कुमाराज्ञ्या । वचोयुक्तिजलोर्मिभिः
॥ स वह्निरिव दीप्तोऽपि । दूरं विध्यापितोऽधुना ॥४॥ अस्मन्मनःस्थितैताज्ञ्या तद्गुणैः प्रगुणी-
कृता ॥ दत्ता वासवदत्तापि । तस्याऽस्मान्निर्मुदा यथा ॥ ५ ॥ स एव नः संबंधी । ततो यौं-
गधरायणः ॥ न्यस्ता वत्सैतदुत्संगे । सप्रत्यायुष्मती मया ॥६॥ शतानीकमृगावत्योः । कौ-
तुकानि निरतरं ॥ असौ वत्सेश्वरामात्यो । मत्पुत्र्यै पूरयिष्यति ॥ ७ ॥ वसंतकोऽपि वत्साया-
स्तत्रास्तु परिचारकः ॥ उक्त्वेति राजा सेनान्य–मथ प्राह वसंतक ॥ ८ ॥ क्रमेण वर्त्ततेऽ-
स्माकं । नः नःवती वशा ॥ अथायं कथयामास । सगद्गदमधोमुखः ॥ ९ ॥ योजनानां

 

शतं गत्वा । सा करेणुशिरोमणिः ॥ व्यपद्यत महीनाथ । त्वागधेयैः समं मम ॥ १० ॥ क्रो-
णीन्नर्त्तुः कुमार्याश्च । वीक्ष्य चंक्रमणक्रमं ॥ आवां पल्लींऽमानेतुं । व्रजंतावमुना धृतौ ॥११॥
निशम्येदमवंतीशः । सुतामनुशुशोच तां ॥ वत्से त्वमधुना वन्ये । पथि चंक्रमसे कथं
॥ १२ ॥ सर्वदैवातपत्रेण । त्राततीव्रातपक्लमा ॥ घर्मं मर्मविधं वत्से । त्वं कथं सहसेऽधुना ॥
॥ १३ ॥ सौरभ्योद्गारि तद्वारि । निपीयापीयसे कथं ॥ पयोऽधुनाध्वकासारि–कासारैः कलु-
षीकृतं ॥ १४ ॥ प्रातराशि प्रिये पुत्रि । निःपरित्रेऽधुना पथि ॥ तवाशनायाऽपाथेयं । कथं न
प्रथते व्यथां ॥ १५ ॥ हंसतूलीनिलीना या । पुष्पेणापि न शाम्यसि ॥ कथं निद्रायसे पुत्रि
। स्थपुटाऽसुस्थलीषु सा ॥ १६ ॥ कूजितैः केलिहंसानां । या शय्यातलमत्यजः ॥ सा स्फारैः
फेरुफुत्कारैः । कथं निद्रां विमुंचसि ॥ १७ ॥ निर्धनो निःपरीवारः । शूरोऽपि सकलोऽपि ते
॥ वत्से वत्सेश्वरः कुर्या–त्प्रेमवानपि किं प्रियं ॥ १८ ॥
तमेवमनुशोचंत–मात्मजां मालवेश्वरं ॥ वत्सेऽन्य आगतश्चैक–श्चरो विज्ञो व्यजिज्ञप-
त् ॥ १९ ॥ वत्सराजं महाराज । सममात्मजया तव ॥ वेगान्निनाय कौशांबीं । पल्लीशो

निरुपद्रवं ॥ २० ॥ सुधाकल्पमिमं जल्प–माकर्ण्य नृपतिस्ततः ॥ मान्यं तमेव सेनान्यं । सा-
नदमिदमादिशत् ॥२१॥ जयवर्मन् द्रुतं गत्वा। वत्सान् वत्सां विवाह्य॥ सुखं सदैव लेतव्या-
वेतौ मंत्रिवसंतकौ ॥२२॥ गत्वा गजशतं वाजि–सहस्रं च महाजवं॥ वराय वरविद्याय। दद्याः
कंकणमोचने ॥ २३ ॥ एवमादिश्य संवाह्य । प्रस्तुतोचितवस्तुभिः ॥ विवाहव्यवहारज्ञं । त-
मिह प्राहिणोन्नृपः ॥ २४ ॥ स एव जयवर्माख्यः । प्रद्योतस्य चमूपतिः ॥ सेनां संस्थाप्य
पुरतो । विज्ञापयितुमागतः ॥ २५ ॥ ततो विज्ञपयामास । सेनानीर्देव मंत्रिणा ॥ यदुक्तं त-
त्तथा किंतु । शुभं निर्णीयतां दिनं ॥ २६ ॥ मौहूर्त्तिकैरथादिष्टे । सुमुहूर्ते महोत्सवात् ॥ मु-
दा वासवदत्तायाः । पाणिमादत्त पार्थिवः ॥ २७ ॥

प्रत्यापणं प्रतिगृहं । प्रतिदेवालयं ततः ॥ विविधारब्धमांगल्यां । कौशांबीमविशन्नृपः
॥ २८ ॥ महाव्यसनविध्वंसा–द्विवाहोत्सवतस्तथा ॥ मंगलानि प्रजास्तस्य । द्विगुणानि प्र-
तेनिरे ॥ २९ ॥ जयवर्माथ निर्माय । स्वाम्यादेशमशेषतः ॥ अर्पितोपायनो राज्ञा । विसृष्टो-
ऽगाद्यथाऽऽगतः ॥ ३० ॥ वसंतकाय महतीं । लक्ष्मीमुदयनो ददौ ॥ उपकारद्रुमः स्थाने ।

रोपितः किमु निष्फलः ॥ ३१ ॥ धुरमारोप्य राज्यस्य । धुर्ये यौगंधरायणे ॥ स स्मरादिष्ट-
मध्यैष्ट । रहस्यं प्रियया सह ॥ ३२ ॥ सा प्रिया तद्वपुस्तच्च । साम्राज्यं तच्च यौवनं ॥ अ-
तो निरर्गलस्तस्य । जज्ञे मकरध्वजः ॥ ३३ ॥ उद्याने मकरंदाख्ये । कदाचित्सहितस्तया
॥ स लतामंडपक्रोडे । क्रीडतिस्म स्मरातुरः ॥ ३४ ॥ उत्क्षिप्तदोर्लतामेनां । कदाचित्कुसु-
मार्थिनीं ॥ उदस्य चुंबनं चक्रे । धूर्त्तस्तस्याश्च वांछितं ॥ ३५ ॥ सूक्ष्मक्षौमाभिरामांग्या । क-
दापि स तया सह ॥ जलकेलिच्छलात्कामं । कामोद्यानमसिंचत ॥ ३६ ॥ इत्यंतःपुरवास्तव्य-
स्तत्संगममहोत्सवैः ॥ गणरात्रमहोरात्र-लीलया सोऽत्यवाहयत् ॥ ३७ ॥ सर्वात्मनाऽपि सं-
रुद्ध-मिदं वासवदत्तया ॥ इतीर्ष्ययेव तच्चेतो । मुमुचे राज्यचिंतया ॥ ३८ ॥
कथांतरप्रसंगेन । तमपृच्छत्प्रियान्यदा ॥ स्वामिन्नद्यापि तस्मान्मे । मंत्राच्चित्रीयते मनः
॥ ३९ ॥ ततो मे कथ्यतां नाथ । केयं देवी मृगावती ॥ यस्याः स्मरणमात्रेण । तीर्यंते दु-
स्तमापदः ॥ ४० ॥ इति पृष्टः सरोमांच-मवोचदथ पार्थिवः ॥ इयं मे तस्य मंत्रस्य । श्रूय-
तां मूलमात्रिका ॥ ४१ ॥ विपत्प्रमाथजननी । जननी मे मृगावती ॥ उरीकृतव्रता साक्षा-

नगोनिशेन नियते ॥ ४२ ॥ महिमातिशयस्तस्या । दृष्टपूर्वः मदस्वशः ॥ असौ मया चम-
त्कारी । प्रस्तावे दर्शितस्तव ॥ ४३ ॥ इत्युपश्रुत्य सानंदं । प्रद्योतदुदिताऽवदत ॥ मन्येऽहं
धन्यमात्मानं । यस्या श्वश्रूरमीदृशी ॥ ४४ ॥ श्वश्रूपादान् प्रसादात्ते । यदि वंदेयं त्वत्कितः
॥ फलं जीवितवृक्षस्य । प्राणेश प्राप्नुयां तदा ॥ ४५ ॥ दैवात्तत्रैव कोऽप्येत्य । व्याजहार
मनोहरं ॥ चिरादभीष्टलाभेन । दिष्ट्या त्वं देव वर्द्धसे ॥ ४६ ॥ अस्ति स्वस्तिकरोऽन्यर्णे ।
यतः स्वर्णपुरे पुरे ॥ प्रयातः सपरिवारो । जिनः सिद्धार्थनंदनः ॥ ४७ ॥ समं तेन समाया-
तां । देवीं देव मृगावतीं ॥ दृष्ट्वाऽहमागमं वेगा—त्तव विज्ञापनाकृते ॥ ४८ ॥ इक्ष्वाकुलंकयं द-
त्वा । स तस्मै पारितोषिकं ॥ पतस्त्रे प्रियया सार्द्धं । वंदारुर्मातरं ततः ॥ ४९ ॥ एकाह्नेन
स पंथानं । निलंघ्य श्लाघ्यमानसः ॥ पुरं स्वर्णपुरं प्राप । यं पुनाति स्वयं प्रभुः ॥ ५० ॥
तौ त्रिःप्रदक्षिणीकृत्य । दंपती प्रणिपेततुः ॥ अपश्चिमजिनाधीशं । पूर्वं पश्चात्प्रवर्त्तिनीं ॥५१॥
ततश्च नम्रपंचांग—समालिंगितभूतलौ ॥ पदद्वंद्वं मृगावत्याः । प्रश्रयेण प्रणेमतुः ॥ ५२ ॥ ता-
वुभौ तन्मुखन्यस्त—निर्निमेषविलोचनौ ॥ पुरस्तादुपविश्यावां । वरिवस्यांबभूवतुः ॥ ५३ ॥

अथ सा वीतरागापि । सरागेवानुकंपया ॥ विशदेनोपदेशेन । चकारानुग्रहं सुते ॥५४॥ आयुष्मन् पुरुषार्थेषु । धर्म एव धुरंधरः ॥ अर्थकामौ हि जानीहि । ध्रुवमेतत्समुद्भवौ ॥ ॥ ५५ ॥ निसर्गेणापि षड्वर्ग–निग्रहाग्रहिको भव ॥ इह चामुत्र चाप्येष । प्राणिनामप्रियंकरः ॥ ५६ ॥ भीताऽभयप्रदानेन । धर्ममावर्जयेस्तथा ॥ इमामासादयेर्वत्स । यथा तीर्थकरश्रियं ॥ ५७ ॥ अवश्यं नश्वरीमेनां । दीनोद्धरणकर्मसु ॥ श्रियं व्यापार्य वत्सेश । विदध्यास्त्वमनश्वरीं ॥ ५८ ॥ कामः क्रोधस्तथा लोभो । मानो हर्षो मदस्तथा ॥ षड्वर्गमुत्सृजेदेनं । त्यक्ते तस्मिन् सुखी नृपः ॥ ५९ ॥ स्नुषामथाऽवदद्वत्से । वत्सेश्वरवधूरसि ॥ प्रद्योतस्य सुता चासि । शिक्षायोग्यासि तद्ध्रुवं ॥ ६० ॥ नित्यं भव स्नुषे वत्से । छायेवोदयनानुगा ॥ एतावतैव वर्याऽर्था । सुकृतोपनिषत्तव ॥ ६१ ॥ स्त्रीणां हि शीलमप्येकं । तुषारकरनिस्तुषं ॥ स्वर्गापवर्गयोर्हेतु–रेवं सर्वविदो विदुः ॥ ६२ ॥ एवं शिक्षामृतं मातु–रापिबंतौ प्रमोदतः ॥ एतौ कांश्चिदहोरात्रां–स्तत्र वासंबभूवतुः ॥ ६३ ॥ अथ जनन्यामन्यत्र । प्रयातायां महीपतिः ॥ आजगाम स्मरन्मातुः । सवाष्पो निजपत्तनं ॥ ६४ ॥ स मातुरुपदेशेन । स्वस्मिन्

देशे समंततः ॥ स्वःपुरीजित्वरीं चक्रे । कौशांबीमवनीश्वरः ॥ ६५ ॥ इति जितपुरुहूतः स्फीतपुण्योपहूतः । प्रतिनवनृपतिश्रीसेव्यमानाह्रिपद्मः ॥ ससुरभिगुणमालो मालवाधीशपुत्री–विषयसुखनिमग्नः स्वीयकालं निनाय ॥ ६६ ॥ इति मलधारिश्रीदेवप्रभसूरिविरचिते श्रीमृगावतीचरित्रे चतुर्थो विश्रामः समाप्तः ॥ श्रीरस्तु ॥

॥ अथ पंचमो विश्रामः प्रारभ्यते ॥

वशं तदानीमानीतः । स्मरेणाथ नृपस्तथा ॥ सेहे न नाम नामापि । कामं धर्मार्थयोर्यथा ॥ १ ॥ प्रियोपचर्यापर्याप्त–कायवाङ्मानसक्रियः ॥ न स कार्यासनं भेजे । न च धर्मासनं यतः ॥ २ ॥ ततोऽमौ तत्यजेऽत्यंत–मोजसा तेजसापि च ॥ अत्यासक्तिः कलत्रेऽपि । शुभोदर्का न कीर्त्यते ॥ ३ ॥ अपरं विषयग्रामं । स भृशं बुभुजे यतः ॥ तदीयविषयग्रामं । परैर्बुभुजिरे ततः ॥ ४ ॥ पांचालस्तु महीपाल–स्तत्र पत्यौ पराङ्मुखे ॥ उदीर्णकामः कौशाम्ब्या–मिच्छत्युपपतीयितुं ॥ ५ ॥ जितवाचस्पतिर्मंत्री । ततो यौगंधरायणः ॥ सेनान्यथोरुमण्वांश्च । मंत्रयामासतुर्मिथः ॥ ६ ॥ फलैकगम्यतारम्यः । पुण्यराशिरिवाद्भुतः ॥ भू-

पालाभ्युदयोदर्क-स्तत्र मंत्रस्तयोरभूत् ॥ ७ ॥ अथोत्थाय समेताभ्यां । ताभ्यामंतःपुरान्नृपः
॥ आनिन्ये नैशमास्थानं । कुतोऽपि व्यपदेशतः ॥ ८ ॥ विस्मयाभिर्निमेषाढ्यैः । सुमनोभिरने-
कधा ॥ भासुरा सा सभा कल्यै-राजन्यैः पर्यपूर्यत ॥ ९ ॥ तदानीं मेदिनीपाले । मध्यम-
ध्यासिते सति ॥ सुखासीनसुनासीरां । सा सुधर्मां व्यडंबयत् ॥ १० ॥ भूपालाकल्परत्नेषु ।
संजातप्रसवैरिव ॥ दीपिकानिकरैस्तस्या-मासीद्दीपोत्सवो नवः ॥ ११ ॥ किंतु भूभर्तुरभ्य-
र्ण-वर्त्तिनी करदीपिका ॥ विध्यातेति निमित्तज्ञैः । सामंतैर्दुर्मनायितं ॥ १२ ॥ वपुः सिंहासने
दृष्टि-र्नम्रसामंतकोटिषु ॥ व्यापार्यत तदा राज्ञा । राज्यामेव मनः पुनः ॥ १३ ॥
इति सर्वजनो याव-दासीदानंदमेदुरः
चिरादुदयनो देवः । स्वीयमास्थानमास्थितः ॥ तावदंतःपुरे स्त्रीणां । शुश्रुवे करुणध्वनिः ॥
॥ १४ ॥ उच्छलत्तारपूत्कार-कातरीकृतकंचुकी ॥ अथाक्रामिलद्द्यावा-भूमिर्भीमो व्यजृं-
॥ १५ ॥ कृतांतमहिषस्कंध-धूसरो धूमसंचयः ॥ ज्वालाजिह्वाशतैर्लोकं । लिलिहा-
न्नत ॥ १६ ॥ ततः किंशुकसंकाशो । वह्निरह्नाय दुर्धरः ॥ लोलज्वालाकलापेन । सद्यो वि-
न इवोच्छितः ॥ १७ ॥ धूमसंभूतजीमूत-संगते गगनांगणे ॥

शुल्लतायितं ॥ १८ ॥ धर्मराजमहाराज–दीपिकाकलिका इव ॥ अभ्रंलिहः स्फुरंतिस्म । स्फुलिंगततयस्तदा ॥ १९ ॥ उत्तरीयं परित्यज्य । ज्वलनज्वलदचलं ॥ प्रणेशुराकुलाः काश्चि–दंतःपुरपुरंध्रयः ॥ २० ॥ रुदंत्यस्त्रात तातेति । कैश्चिदेत्य दयालुभिः ॥ ज्वालामालाभिराश्लिष्टाः । कृष्टाः कष्टेन काश्चन ॥ २१ ॥ अनले तत्र कल्पात–वह्निसब्रह्मचारिणि ॥ क्षोभः सन्नायां नूनचुः । कोऽप्यपूर्वोऽभवत्तदा ॥ २२ ॥ मूर्छामगच्छन् केऽप्यत्र । केऽप्यमर्षंत निर्दयं ॥ विद्रूपणसहस्राणां । मथने तु कथैव का ॥ २३ ॥ हहा दंदहति देवीं । हताशोऽयं हुताशनः ॥ इति जल्पन्नधाविष्ट । वेगाद्यौगंधरायणः ॥ २४ ॥ स गच्छन्नुत्सुकस्तेषां । सर्वेषामेव पश्यतां ॥ उन्निद्रकीलाकल्लोलै–रालोकैः कवलीकृतः ॥ २५ ॥ ततः कोपाद्विकोशासि–राक्रोशंत हुताशनं ॥ जवाज्जगाम हे देवि । हा देवीति वदन्नृपः ॥ २६ ॥ रुषा हुताशं हंतिस्म । नृपतिस्तरवारिणा ॥ कार्योपायं न पश्यंति । कोपव्याकुलचेतसः ॥ २७ ॥ वह्निविध्यापनायेव । प्रियाविरहकातरः ॥ वाष्पोर्मिनिर्मितं पूर–मुमुचतिस्म स निर्झरं ॥ २८ ॥ कालजिह्वालमालोक्य । कृशानुमकृशं ततः ॥ दग्धां देवीं विनिश्चित्य । मूर्छतिस्म महीपतिः ॥ २९ ॥ अहो

किमत्र त्रावीति । संभ्रांतेन रुमण्वता ॥ पुनश्चैतन्यमानिन्ये । महींडुश्चंदनादिभिः ॥ ३० ॥
विललाप महीपाल–स्ततो म्लानमुखांबुजः ॥ हा देवि हा सरोजाक्षि । हा प्रिये हा प्रियं-
करे ॥ ३१ ॥ इहापहाय मामेव–मेकाकिनमनागसं ॥ क्व प्रयातासि रंभोरु । दूरं ताम्यत्ययं
जनः ॥ ३२ ॥ अयि स्वछे समागछ । विरहस्याऽसहोऽस्म्यहं ॥ अनेनाऽशनिपातेन । हृदयं
मे विदीर्यते ॥ ३३ ॥ मनस्विनि न मानस्य । मनागप्यस्मि गोचरः ॥ जन्मतोऽपि न ते येन
। किंचिदप्रियमाचरं ॥ ३४ ॥ मयाद्यैव चिराच्चक्रे । कार्यासनपरिग्रहः ॥ अस्मिन्नेवांतरे धि-
ग्मां । मुमोषायमुषर्बुधः ॥ ३५ ॥ आतपस्तपनस्यापि । न कदापि यदस्पृशत् ॥ तदंगं तव
तन्वंगि । ददाह दहनः कथं ॥ ३६ ॥ पितरौ तौ परित्यज्य । यन्मादृक्पतिरादृतः ॥ तस्येदृ-
शं परीणाम–फलमासादितं त्वया ॥ ३७ ॥ त्वयाऽरण्यपथे तस्मि–न्नहं सहचरः कृतः ॥ च-
लितासि कथं बाले । मार्गेऽमुत्र मया विना ॥ ३८ ॥ अथवा किमुपालंभै–रहं तेनैव वर्त्म-
ना ॥ तन्वि त्वरितमेषोऽस्मि । त्वदंतिकमुपागतः ॥ ३९ ॥ अद्यापि येन जागर्त्ति । ममार्त्ति-
छेदकोविदः ॥ ज्वालाजालजटालोऽयं । सर्वभक्षी हुताशनः ॥ ४० ॥

एवं विलप्य तत्रासौ । झंपां दातुं प्रचक्रमे ॥ प्रेयसीविप्रयोगार्त्ताः । किं न कुर्वंति रागिणः ॥४१॥ वसंतकेन मित्रेण । सेनान्या च रुमएवता ॥ युक्तियुक्तवचोभंगे–र्नृपश्चैवमबोध्यत ॥ ४३ ॥ देवाशुशुक्षणिः सोऽयं । देवीदहनकर्मणा ॥ प्रत्यक्षः प्रतिपक्षोऽतः । सर्वथोक्षेदमर्हति ॥ ४४ ॥ स्त्रीहत्यापातकी ह्येष । चक्षुषापि निरीक्षितुं ॥ नोचितः किं पुनर्देव । संगमवगूहितु ॥ ४५ ॥ न च मृत्युवशीकर्त्तुं । स्वात्मानं युज्यते सतां ॥ जीवंतो हि पुनर्जातु । लभेरन्निप्सितं कचित् ॥ ४६ ॥ प्रमीताना पुनः स्वामिन् । दुर्लभो वल्लभागमः ॥ मार्गैः कर्मवशाद्भिन्नैः । संचरते हि देहिनः ॥ ४७ ॥ किंच किंकार्यतामोहे । कृत्यमार्गप्रकाशिका ॥ अन्या मातुर्मृगावत्या । अस्ति नो हस्तदीपिका ॥ ४८ ॥ तदेहि त्यज कातर्यं । गम्यते तत्पदांतिक ॥ पुसामाप्तोपदेशाय । देशांतरगमः कियत् ॥ ४९ ॥ श्रूयते दिशि पूर्वस्या–मिदानीं विहरन् स्वयं ॥ वीरो हि भगवान् विश्व–कर्मनिर्मूलनोद्यतः ॥ ५० ॥ तत्परीवारसर्वस्वं । निर्मला श्रमणी गुणैः ॥ मृगावत्यपि तत्रैव । संभाव्या भुवनाधिप ॥ ५१ ॥ तत्सर्वमवधार्येद । सर्वकृत्यविचक्षणः ॥ एनमेनस्विनं दूरात् । परित्यज हविर्भुजं ॥ ५२ ॥

प्रपद्येति वचो राजा । रुमएवंतमभाषत ॥ साधु सेनापते साधु । स्मारितो मातरं त्व-
या ॥ ५३ ॥ दुःखव्यपगमोपायः । साधीयानयमेव मे ॥ जननी जनयत्येव । दृष्टापि सुख-
संपदं ॥५४॥ परमाहूयतामत्र । मंत्री यौगंधरायणः ॥ यथालोच्य समं तेन । वितनोमि य-
थोचितं ॥ ५५ ॥ अथोवाच चमूनाथः । सबाष्पः पृथिवीश्वरं ॥ देवी प्रद्योतजा यत्र । तत्र
यौगंधरायणः ॥ ५६ ॥ इति श्रुत्वा प्रजानाथ–स्तं शुशोच पुनः पुनः ॥ समं मुक्तोऽस्मि दे-
व्या च । त्वया च सचिवोत्तम ॥ ५७ ॥ त्वामंतरेण दूरेण । गतं मे सुखसंपदा ॥ सद्बुद्धे रा-
ज्यधौरेयः । को हि त्वदपरो मम ॥५८॥ अपराधोपहूतस्य । त्वां विना भाविनी मम ॥ वि-
दित्वा विपदं सद्यः । कोऽद्य प्रतिकरिष्यति ॥ ५९ ॥ संग्रामेष्वभ्यमैत्रीणे । मयि निर्व्याज-
पौरुषः ॥ त्वां विना पुरतो भूत्वा । को धुरं धारयिष्यति ॥ ६० ॥ किमेवं वानुशोचामि । वे-
धसि प्रातिकूलिके ॥ तद्गत्वा मातुरभ्यर्णे । कार्यः कार्यस्य निर्णयः ॥ ६१ ॥ परिचर्याविनी-
ताभ्यां । ताभ्यामनुगतस्ततः ॥ स शोकविकलात्मापि । प्राचींप्रत्यचलद्दिशं ॥ ६२ ॥ भुज्य-
मानां परैर्वीक्ष्य । जागरूकत्रपाभरः ॥ अहोभिः पंचषैरेव । स भूमिममुचन्नृपः ॥ ६३ ॥


॥११६॥

कुर्वन् विश्राममारामे । कुत्रचित्सिद्धपुत्रकं ॥ एकं निविष्टमैक्षिष्ट । सहकारतरोस्तले ॥ ६४ ॥ विलोक्य पुस्तक हस्ते । नियतं ज्ञानवानयं ॥ इत्यवेत्य नमस्यंत–स्तत्पुरस्तेऽप्युपाविशन् ॥ ॥ ६५ ॥ कदा व्यसनपारीणो । भविष्यत्येष नः प्रभुः ॥ इदं निवेद्यतामस्ति । यद्यस्मासु कृपालुता ॥ ६६ ॥ तं स्मएवांस्ततोऽवादी—दावद्धविनयांजलिः ॥ भवादृशाः प्रज्ञोऽवश्यं । स्युः कालत्रयवेदिनः ॥ ६७ ॥ इति तेन तदोक्तोऽस्मै । कथयामास सोऽप्यदः ॥ भविष्यत्येष वर्षांते । दुःखाकूपारपारगः ॥ ६८ ॥ वंचितोऽनेन यच्चक्र–श्चक्रवाकीपिधानतः ॥ याममेकं पुरा तस्य । कर्मणस्तदिदं फल ॥ ६९ ॥ किंत्वसामान्यमासाद्य । कन्यारत्नमयत्नतः ॥ अ-सौ साम्राज्यलक्ष्मीं च । प्रेयसीं च प्रपत्स्यते ॥ ७० ॥

इति श्रुत्वाथ तं नत्वा । ताभ्यामनुगतोऽग्रतः ॥ व्रजन्नुदयनो मान्यं । सेनान्यं समभाषत ॥ ७१ ॥ प्रियोक्तिभिर्मृषाद्यापि । धूर्त्तैरार्त्तः प्रतार्यते ॥ दग्धाप्युदीर्यते देवी । जीवतीति किमन्यथा ॥ ७२ ॥ भवति प्रियया योगः । प्रोषितप्राणयापि चेत् ॥ पूर्वजा अपि सर्वेऽपि । किं मिलेयुर्न मेऽधुना ॥ ७३ ॥ जीवत्यद्यापि देवीति–वदंती किंवदंत्यपि ॥ प्राणप्रया-

स । स्वरूपं पश्चिमेऽहनि ॥ ९६ ॥ तदा त्यक्तां त्वया देव । पांचालश्चतुरान्निधः ॥ दत्वा ह-
ढमवस्कंद–माचस्कंद पुरीं तव ॥ ९७ ॥ रुमण्वानपि मत्वेदं । माहलेश्वरमन्वगात् ॥ प्रता-
पमाहतस्वाप–मिवोद्भापयितुं तव ॥ ९८ ॥ इत्याकर्ण्य विसृज्यैन–मुवाच स वसंतकं ॥ स-
खे खेदोऽयमस्माक–मुपर्युप रिढौकते ॥ ९९ ॥ हुताशस्याहुतिर्जाता । सुता प्रद्योतभूपतेः ॥ ए-
तामेवान्वगान्मंत्री । राज्यश्रीराददेऽरिभिः ॥ १०० ॥ वत्सभर्तुरहो कीर्त्ति–रहो भाग्यपरंपरा
॥ एकोऽद्य श्रेयसे मृत्युः । स च कर्त्तुं न युज्यते ॥ १ ॥ न च किंचित्तदुद्यानं । न सा वा-
पी न तत्सरः ॥ उद्वेगस्यायमावेगः । क्षणं यत्रातिवाह्यते ॥ २ ॥
ततो वसंतकः प्राह । देव मिथ्यैव खिद्यसे ॥ किं प्रभावः प्रभोरस्य । वचो वा ज्ञानि-
नोऽन्यथा ॥ ३ ॥ तत्प्रतीक्षस्व वर्षांत–र्लप्स्यसे सर्वमीप्सितं ॥ इदानीं तु विनोदाय । शृणु
स्थानं निवेदये ॥ ४ ॥ इहैव नातिदूरेऽस्ति । सुपुष्पं नाम काननं ॥ तस्मिन् सुमनसश्चेतु–
मपरेद्युरहं गतः ॥ ५ ॥ चिन्वंतीं तत्र पुष्पाणि । स्त्रियमेकां व्यलोकयं ॥ आलापसस्पृहो म-
त्वा । तामपृच्छमतुच्छकं ॥ ६ ॥ भद्रे पुष्पाणि चीयंते । किमेतानि सहस्रशः ॥ इति प्रीत्या

च पृष्टा सा । व्यक्तमेवमचीकथत् ॥ ७ ॥ अस्ति माहिष्मतीनाम–नगरी श्रीगरीयसी ॥ म-
हीपतिर्महाबाहुः । शास्ति यामास्तिकोत्तमः ॥ ८ ॥ प्रिया कमलमालेति । तस्यास्ति सुर-
भिर्गुणैः ॥ तयोः सुदर्शनः सूनु–रनूननयविक्रमः ॥ ९ ॥ तत्रास्ति सागरस्येव । पद्मा पद्मा-
वती सुता ॥ भविष्यति पतिर्योऽस्याः । स एव पुरुषोत्तमः ॥ १० ॥ रूपे निरुपमे सा तु ।
नवे च वयसि स्थिता ॥ पार्थिवैः प्रार्थ्यमानाऽपि । वरं न बहुमन्यते ॥ ११ ॥ किंतु त्यक्त-
गृहावासा । वनवासमुपेयुषी ॥ साऽत्र केनापि कामेन । तप्यते दुस्तप तपः ॥ १२ ॥ तद-
स्मत्स्वामिनी सेयं । त्रिसंध्य शुद्धमानसा ॥ कुसुमैरमलैरेभिः । कुरुते देवतार्चनं ॥ १३ ॥
अहं चंपकमालेति । सखी तस्या मनःसमा ॥ इति सा कथयंत्येव । केनाप्याहूयतान्यतः ॥
॥ १४ ॥ त्वमप्यतिथिरस्माकं । भवेरार्य कथंचन ॥ एवमामंत्रयंती मां । सा ययौ त्वरितैः
पदैः ॥ १५ ॥ देवः को नाम नाभेय–प्रभोरन्योऽत्र पूज्यते ॥ यदेतन्न मया ज्ञातं । तच्चु चि-
त्ते दुनोति मां ॥ १६ ॥ तदाकर्ण्याद्भुतं भूप–स्तद्युतस्तद्ययौ वनं ॥ तत्राऽपश्यच्च कैलास–सुं-
दरं देवमंदिरं ॥ १७ ॥ स तं प्रासादमुत्तुंग–मारुरोह कुतूहलात् ॥ विशंस्तु गर्भगेहांत–रूचे

चंपकमालया ॥ १८ ॥ द्वारदेशस्थितामह । तां सहासं वसंतकः
अत्रैव स्थीयतामत्र—न्नवज्ञिरिति वादिनीं ॥ प्रवेशोऽपि यदस्माकं । निषेधोऽत्रपदे
॥ १९ ॥ न्नहे त्वयेन्नमातिथ्य—मतिथीनां वितन्यते ॥ देवागारप्रवेशेऽस्मिन् । शृ-
कृतः ॥ २० ॥ ततः सप्रश्रयं प्राह । सा त्वं किमिति कुप्यसि ॥ वार्त्तयंतीं त्वयाऽस्मा-
णु वारणकारणं ॥ २१ ॥ वनांतर्दिवसे तस्मिन् । पुष्पाण्युच्चेतुमागतां ॥ एकामा-
कं । स्वामिनी मामजूहवत् ॥ २२ ॥ गताहं च द्रुतं तत्र । देव्याः सविधिवर्त्तिनीं ॥ मन्ये
लोक्य तन्वंगी—मपृच्छं स्मेरविस्मया ॥ २३ ॥ देवि केयं जगन्नेत्र—कैरवाकरकौमुदी ॥ देवी पद्मावती म-
निर्माल्यमेतस्याः । सापि क्षीरोदनंदिनी ॥ २४ ॥ अथासौ कथयामास । न्नत्रान्यां स पुरंध्रीन्न्या—म-
म ॥ पुष्पार्थं त्वयि यातायां । विप्रः कश्चिदिहाययौ ॥ २५ ॥ अनयोः कल्यरूपेयं ।
न्वितो मधुराकृतिः ॥ साशीर्वादमवादीन्मा—मिदमादरबंधुरं ॥ २६ ॥ अस्याश्च नवला-
विद्धि कल्याणि मे स्वसा ॥ इयमप्यपरा नित्य—मेतस्याः परिचारिका ॥२७॥ तन्न्या-
वण्य—पुण्यायास्तरुणत्वगः ॥ वितीर्णविविधायासं । प्रवासं च गतः पतिः ॥ २८ ॥

सीकर्तुमन्यत्र । नेमां विश्वसिमि क्षणं ॥ स्त्रियः श्रियश्च निक्षेप्तुं । न युक्तं यत्रकुत्रचित् ॥
॥२९॥ एतस्या च त्वत्या च । न विशेषं वदाम्यहं ॥ वामदक्षिणयोरक्ष्णोः । कस्याप्यस्ति
किमतरं ॥ ३० ॥ धात्रीशपुत्रि तत्ताव–दियं मम सहोदरा ॥ सतीजनशिरोरत्नं । तत्राऽन्य-
र्णेऽवतिष्ठता ॥ ३१ ॥ यावदुज्जायिनीं गत्वा । सिद्धसर्वप्रयोजनः ॥ पुनः प्रतिनिवर्त्तेऽहं । तद-
स्तु स्वस्ति तेऽधुना ॥ ३२ ॥ ॐमित्युक्तो मया सोऽपि । यथाभिलपितं ययौ ॥ प्रमोदसंविभागा-
य । त्व चाहूतासि सप्रति ॥ ३३ ॥ तपोभिर्दुस्तरैरद्य । सखि मंजरितं मम ॥ सेयं सहचरी ल-
ब्धा । यन्नेत्रामृतसारणिः ॥ ३४ ॥ सखि चंपकमाले त–न्मामिवैतामनारतं ॥ वीक्षेथाः सर्वथा
येन । गुणगृह्यासि सर्वदा ॥ ३५ ॥ वसंतकस्ततो दध्यौ । विप्रो यौगंधरायणः ॥ ध्रुवं वास-
वदत्ता सा । समं कांचनमालया ॥ ३६ ॥ मन्त्रिन्नंकुरितस्ताव–त्तव मंत्रमहीरुहः ॥ इदानीं
सुभगो भूया–त्पल्लवैः कुसुमैः फलैः ॥ ३७ ॥ ततश्चंपकमाला सा । पुनरेनमभाषत ॥ सा
ब्राह्मणी प्रियं स्मृत्वा । रुदतीह पुनः पुनः ॥ ३८ ॥ अत्यंतं रुदती सा मे । स्वामिनीमप्यरो-
दयत् ॥ परदुःखावतारस्य । पात्र हि महतां मनः ॥ ३९ ॥ अद्यापराह्णसमये । संबोध्य वि-

विद्योक्तिभिः ॥ आनिनाय विनोदाय । तामिह स्वामिनी मम ॥ ४० ॥
इह प्रवेशः कस्यापि । न दातव्यस्त्वया सखि ॥ इत्यादिदेश मां देवी । विशंती गर्भवे-
श्मनि ॥ ४१ ॥ तदात्मना तृतीयास्ति । देवी देवगृहोदरे ॥ अतो त्वद निषिद्धोऽसि । तन्म-
नागपि मा कुपः ॥ ४२ ॥ अथोत्तिष्ठ सखे यामः । प्रवेशश्चेन्न लभ्यते ॥ किमत्रावस्थितेने-
ति । नृपोऽवादीद्वसंतकं ॥ ४३ ॥ देव क्षणं प्रतीक्षस्व । शीतलेऽस्मिन् शिलातले ॥ विश्रामं
वितनोमीति । सोऽपि तं प्रत्यवोचत ॥ ४४ ॥ ततस्तस्मिन् शिलासीने । विशामीशोऽप्युपा-
विशत् ॥ स्वैरालापान् मिथः सख्यो-र्मध्ये शुश्रुवतुश्च तौ ॥ ४५ ॥ विरहक्लांतमात्मानं । व्य-
वस्थाप्य कथंचन ॥ प्रद्योतदुहिता प्राह । महाबाहुतनूरुहं ॥ ४६ ॥ तव प्रियसखि स्नेह-श्वा-
पलाय युनक्ति मां ॥ तत्पृच्छामि वयः क्वैत-द्वनवासविधिः क्व च ॥ ४७ ॥ द्वयोर्विरोधिनोः
कोऽय-मेकत्र वसतिक्रमः ॥ इदं नातिरहस्यं चे-त्तदा व्याहर्तुमर्हसि ॥ ४८ ॥ व्याजहार त-
तः स्नेहा-च्छाहलेश्वरनंदिनी ॥ किं तदप्यस्ति यद्गोप्यं । तथापि श्रूयतामिदं ॥ ४९ ॥ जानास्यु-
दयनो नामा । कौशांब्या अवनीपतिः ॥ विपंचीचातुरीचंचुं । वत्सराजमुशंति यं ॥ ५० ॥

नुपेत्य योगिनी जातु । शंकराख्याऽतिनिर्मला ॥ विस्तार्य तद्गुणश्रेणिं । ववंध हृदयं मम ॥ ॥ ५१ ॥ ततोऽनून्मेऽस्य रागेण । वद्रागं मनस्तथा ॥ यथासीत्प्रार्थना व्यर्था । पार्थिवानां मदर्थिनां ॥ ५२ ॥ तस्मै स्वयंवरां दातु–मीषतुः पितरौ च मां ॥ नाग्यैरनुगृहीतास्मी–त्यहं च मुदमावहं ॥ ५३ ॥

अथाकस्मान्मनोवेधा । वार्तामश्रौषमीदृशीं ॥ यत्तस्य वसुधाजर्तुः । शुद्धांते वह्निरुत्थि-तः ॥ ५४ ॥ रहस्यहृदयं प्राण–सर्वस्वमिव पिंडितं ॥ प्रिया वासवदत्तेति । या च तस्य निशा-म्यते ॥ ५५ ॥ तदा प्रदीपने तत्र । दग्धा सा नृपवल्लभा ॥ दह्याऽदह्यविज्ञागं न । कुर्वंति-स्म हविर्भुजः ॥ ५६ ॥ कथं हरसि देवीं मे । पश्यतः पश्यतोहर ॥ इत्याक्षिप्य क्षितीशेन । शस्त्रैर्वह्निरहन्यत ॥ ५७ ॥ ततो विलप्य तामन्वग् । विविक्षन्नाशुशुक्षणिं ॥ संवोध्य बहुशो वाहौ । धृत्वाऽमात्यैः स वारित ॥५८॥ सोऽथ राज्यं परित्यज्य । देशांतरगतः क्वचित् ॥ ब्रह्मचा-री शुचिः कांचि–द्देवतां वरिवस्यति ॥ ५९ ॥ इत्युदंतं निशम्यांत–र्द्वले मूर्छामुपागमं ॥ क-थंचित्प्राप्य चैतन्य–मुच्चैर्दुःखादरोदिषं ॥ ६० ॥ नवानकृत्रिमः शत्रु । रे रे दैव सदैव मे ॥

मय्यकस्मादवस्कंदं । यदेवं दत्तवानसि ॥ ६१ ॥ मम कोरकितः किंचि—न्मनोरथमहीरुहः ॥
त्वया व्यसनसंपात—दुर्वातेन निपातितः ॥ ६२ ॥ तथापि तेन संगाय । परस्मिन्नपि जन्मनि
॥ स्वयमूरीकृतो मृत्यु—र्मया कर्त्तास्मि किं ततः ॥६३॥ एवं दैवमुपालभ्य । मृत्युं निश्चित्य चे-
तसि ॥ गत्वोपवनमारब्धं । यावदुद्बंधनं मया ॥ ६४ ॥ तावच्चंपकमालातो । विज्ञातमदुप-
क्रमौ ॥ आतुरौ पितरावेत्य । साश्रौ मामेवमूचतुः ॥ ६५ ॥ वत्से वत्सेश्वरेऽवस्था—मीदृशी-
मुपजग्मुषि ॥ तवान्ये परिणेतारः । किं न संति महीभुजः ॥ ६६ ॥ असदध्यवसायस्ते ।
कोऽयं पुत्रि त्रपाकरः ॥ अन्ये त्वदर्थे ताम्यंति । वृथैव त्वं तु ताम्यसि ॥ ६७ ॥ पित्रोरप्येव-
मादेशौ—रत्यजंतीं तमाग्रहं ॥ एत्यानुकंपया साध्व । शंकरा मामभाषत ॥ ६८ ॥ श्रुतं भद्रे
मयाप्येतत् । किंत्वीदृग् व्यसनोदयः ॥ द्विधा भवति दैवो वा । मंत्रिमंत्रोद्भवोऽथवा ॥६९॥ अ-
वद्य एव तत्राद्यः । पक्षस्तच्चिंतयाऽप्यलं ॥ शुभायतिर्द्वितीयस्तु । तदेवं संशये सति ॥ ७० ॥
त्वमपि प्रियवत्तस्मा—द्देवताराधनं कुरु ॥ देवता च कुलस्त्रीणां । पतिरेव प्रकीर्त्तितः ॥ ७१ ॥
तद्गृहाण तदेकाग्रा । समग्राभ्युदयप्रदां ॥ यथावल्लिखितामेतां । पतिप्रतिकृतिं पटे ॥ ७२ ॥

एतदर्चापरा कांते । प्रत्यक्षं द्रक्ष्यसि स्वयं ॥ कार्यसिद्धिरवश्यं स्या–त्तेदकध्यानचेतसां ॥
॥ ७३ ॥ इत्युदीर्य पटं दत्वा । पूजाम्नायं समर्प्य च ॥ योगान्निवृत्त्येऽवंतीं । गता भगवती त-
तः ॥ ७४ ॥ ततो रम्यमगोपांत–मुत्संगितनभोंगणं ॥ इदं प्रासादमाधत्त । बंधुर्मम सुदर्शनः
॥ ७५ ॥ अत्र स्थापितमभ्यर्च्य । सुमनोभिः सुगंधिभिः ॥ वत्सराजमपव्याज–महं प्रणिद-
धेऽन्वहं ॥ ७६ ॥ स्वप्नेऽप्यद्य मया दृष्टो । दिष्ट्यासौ जीवितेश्वरः ॥ तदिदानीं त्वमप्येनं । स-
खि नेत्रातिथीकुरु ॥ ७७ ॥ ततः प्रद्योतदुहिता । सा बहिःस्थमुदाहरत् ॥ सखि जातु न-
रं नान्य–मालोकेत पतिव्रता. ॥७८॥ स्थाने तन्वि तव प्रेम । वत्सेश्वरनरेश्वरे ॥ हंसं विहा-
य किं हंसी । रमते सुमते क्वचित् ॥ ७९ ॥ एतद्धि प्रतिमामात्रं । न दोषायेतिवादिनी ॥
पटं पद्मावती तस्या–स्ततः स्नेहाददर्शयत् ॥ ८० ॥ अथार्यपुत्र चित्रेऽपि । दिष्ट्या दृष्टश्चिरा-
न्मया ॥ चिंतयतीति साऽपश्यत्तं पटं सार्द्रया दृशा ॥ ८१ ॥

बहिःस्थितोऽथ राजान–मवोचत वसंतकः ॥ आकर्णितमिदं देव । सख्योरन्योऽन्यज-
ल्पितं ॥ ८२ ॥ अभ्यर्चयसि नाथेयं । भक्त्या त्वं स्वामियं पुनः ॥ इदं सद्यो ददौ तुभ्य—

मन्नीष्टं विष्टपाधिपः ॥ ८३ ॥ नृपोऽन्नाविष्ट न्नोः संति । वत्सराजाः सहस्रशः ॥ बहुशो
नामसाम्येन । प्रतार्यंते न्नवादृशाः ॥ ८४ ॥ कंथान्निरथवा स्त्रीणां । कृतं नो ब्रह्मचारिणां ॥
सांध्याय विधये याम । इति यावद् यियासति ॥८५॥ चित्राकारसमाकारं । नृपमालोक्य वि-
स्मयात् ॥ पृष्टो वसंतकः कोऽय–मिति चंपकमालया ॥ ८६ ॥ नर्ममंत्री ततोऽवादी–दसावु-
दयनो नृपः ॥ यं तव स्वामिनी चित्ते । प्रणिधत्ते दिवानिशं ॥८७॥ मध्ये वेगेन गत्वाथ । सा
जगाद नृपात्मजां ॥ अपूर्वावतिथी प्राप्तौ । कावप्यातिथ्यमर्हतः ॥ ८८ ॥
ततः सुता महाबाहो–र्गन्नगेहाद्विनिर्ययौ ॥ आह प्रद्योतजामेहि । क्रियतेऽतिथिसत्क्रि-
या ॥ ८९ ॥ साऽप्यूचे सखि गछ त्वं । प्रथयातिथिपूजनं ॥ नित्यमेवास्मि विमुखी । पुरु-
षांतरदर्शने ॥ ९० ॥ पद्मावत्यर्घहस्ताथ । निर्ययौ च मुदा बहिः ॥ अंतः कांचनमालां च ।
रहः प्रद्योतजाऽवदत् ॥ ९१ ॥ सखि तदा समागत्य । मंत्री यौगंधरायणः ॥ विनयावनतो-
ऽवादीत् । शृणु मातर्वचो मम ॥ ९२ ॥ दैवात्स्मरवशे देवे । शुद्धांतमधितस्थुषि ॥ राज्य-
माज्यमिवाघ्रातं । बलात्प्रत्यर्थिपार्थिवैः ॥ ९३ ॥ चंडप्रद्योतन्नूनर्तुः । पुत्री त्वमसि तद्ध्रुवं ॥

किं ब्रूमो वेत्सि यत्सर्व–मित्युक्ताहमथाब्रुवम् ॥ ९४ ॥ एतत्त्यजामि वा राज्यं । यामि वा
पितृवेश्मनि ॥ ब्रूषे यत्तत्करोमीति । मयाऽप्यस्मै प्रतिश्रुत ॥ ९५ ॥ ततस्तेन निजारंभ–सं-
रंभेण सुरंगया ॥ वह्निमंतःपुरे दत्वा । समाकृष्टास्म्यहं वहिः ॥ ९६ ॥ क्रीडाशुकपिकीहंस–
कुरंगकचकोरकाः ॥ मुक्ता निजनिजस्थाने । दृष्टा तत्यजिरे मया ॥९७॥ ज्वलनालिंगनोद्भूत-
–निशछेदः परिछदः ॥ अभून्मदीयोऽनेदीयो । मृत्योरत्याकुलः कथं ॥९८॥ तत्तदित्यनुशोचंती
। दाक्षिण्यात्तस्य मंत्रिणः ॥ नक्तमहिकरङ्का । चलितास्मि पुरस्ततः ॥ ९९ ॥ निःशूकफेरु-
फूत्कार–प्रादुर्भूतभयाकुला ॥ किं न स्मरसि दत्वाह । बाहुं संधीरिता त्वया ॥ १०० ॥ अ-
धिशिष्य त्वयास्तीर्णे । श्रस्तरे पल्लवैः पथि ॥ तदा तमोभिर्भीमायां । निशि निशमुपागमं
॥ १ ॥ शनैरित इतो देवी–त्यमात्याख्यातपद्धतिः ॥ तदा तृड्व्याकुलां हि त्व–मपीप्यः स-
खि मा पयः ॥ २ ॥ तदेत्थमुपचारेण । विधूताध्वपरीश्रमा ॥ स्होऽहं मंत्रिणानीय । मुक्ता
पद्मावतीमनु ॥ ३ ॥ क्लेशावेषमिमं सर्वं । सहमानातिदुस्सहं ॥ सर्वथा मंत्रिणो वाणीं । प्र-
माणीकृतवत्यहं ॥ ४ ॥ पद्मावतीं सपत्नीं मे । शंकरायाः प्रयोगतः ॥ चिकीर्षता पुनस्तेन ।

विधीनेवंविधा-
किं किं नापकृतं मम ॥ ५ ॥ मंत्रिणः परमास्त्रं हि । शंकरा कार्यसाधकं ॥ विधीनेवंविधा-
न् किं च । सैव कर्त्तुं प्रगल्भते ॥ ६ ॥ न्यासीकृता तवोत्संगे । मंत्रिन् पुत्री मयाधुना ॥
इति तातवचोऽप्येष । न सस्मार जरन्नवः ॥ ७ ॥

ऊचे कांचनमालाथ । मंत्रिणे देवि मा कुपः ॥ यदेषः क्लिश्यते नित्यं । तवैव हितका-
म्यया ॥ ८ ॥ मनोवाक्कायकर्माणि । तत्वबुद्धिप्रयोगतः ॥ नित्यं व्यापारयत्येष । राज्योद्धर-
णहेतवे ॥ ९ ॥ राज्ञः पद्मावतीयोगा–त्वत्संयोगो हि निश्चितं ॥ नह्री प्राचीमनाश्लिष्य ।
न्मानुर्भुक्ते दिनश्रियं ॥ १० ॥ पर्यालोच्येदमेवोच्चै–र्मंत्रिणोऽयमुपक्रमः ॥ तद्देवि मंत्रिमंत्राणां
। युज्यते द्रष्टुमायतिं ॥ ११ ॥ स्वयमूरीकृतं चैत–त्सहस्वक्लेशवैवशं ॥ महद्भिरभ्युपेतोऽर्थः ।
सर्वो निर्वाहमर्हति ॥ १२ ॥ किंच लेखोऽस्ति यस्तात–प्रहितोऽद्य समागतः ॥ मयात्मना स-
मानीतः । स इदानीं विज्ञाप्यतां ॥ १३ ॥ वाच्यतामिति सा वाच–मवाप्य स्वामिनीमुखा-
त् ॥ नीचकैर्वाचयामास । मुदिता विशदाक्षरं ॥ १४ ॥ स्वस्ति श्रीमदवंतीतः । श्रीमान् प्र-
द्योतन्नूपतिः ॥ वने वासवदत्ताख्या–मात्मजां बोधयत्यदः ॥ १५ ॥ मत्वा कुशलमस्माकं ।

र्धीयाः परमां धृतिं ॥ निजकल्याणवार्त्ताभि–र्मोदनीयाः सदा वयं ॥ १६ ॥ समस्तमपि
निकृतं । युगंधरसुतेन नः ॥ व्यसने पतितास्मीति । खिन्नास्मिन खलु मास्मभूः ॥ १७ ॥
कृतं पुत्रि वदूकेन । रच्यते सचिवेन चेत् ॥ सपत्न्यपि तदा वत्से । प्रपद्येथाः सखीति तां ॥
॥ १८ ॥ आदिश्य पालगोपालौ । विपक्षोच्छेदपूर्वकं ॥ वत्सराजस्य साम्राज्य–मुद्धृतं ज्ञायता-
मिति ॥ १९ ॥ वचः कांचनमालाया । लेखार्थं चावगम्य तं ॥ ततः प्रद्योतजाऽवादी–दमा-
त्ये त्यक्तमत्सरा ॥ २० ॥ सखि साधु त्वया प्रोक्तं । तातादेशोऽपि तेऽनुगः ॥ किं तु न ज्ञा-
यते कुत्रा–प्यार्यपुत्रस्तपस्यति ॥ २१ ॥ वार्त्तयत्योस्तयोरित्थ–मुषिताश्रुर्विषादिनी ॥ पद्मावती
निरुत्साहा । विवेशाभ्यन्तरे तदा ॥ २२ ॥

अथ तां समदुःखेव । तदा प्रद्योतजाऽब्रवत् ॥ सखि ते वदने कांतिः । किं जातेयं म-
लीमसी ॥२३॥ लज्जाग्रस्तगिरं मत्वा । स्वामिनीं चतुरा ततः ॥ तस्यै चंपकमालेव । यथावृ-
त्तमचीकथत् ॥ २४ ॥ तत्रैकमतिथिं वीक्ष्य । सखि स्वामिन्युवाच मां ॥ सोऽयं चित्रपटा-
कारः । किमु जंगमतां गतः ॥ २५ ॥ तपस्ते फलितं सद्यो । देवि चिंतय मान्यथा ॥ मये-

॥१३१॥

देवीं निर्वर्ण्य सर्व-
त्युक्ताथ सा नाऽन्नू–द्दलंन्नूष्णुः पदक्रमे ॥ २६ ॥ अथायमतिथिः स्वैरं । देवीं निर्वर्ण्य सर्व-
तः ॥ द्विविधं वर्णयामास । प्रमोदात्सुहृदः पुरः ॥२७॥ एषा सखेदा किं चात्र । शंभुन्नस्मी-
कृतात्मनः ॥ अनंगस्यांगलाभाय । किं रतिस्तपते तपः ॥ २८ ॥ किं वाऽसौ क्षेत्रमाहात्म्या–
द्विशेषपदसस्पृहा ॥ व्यवस्यतीह तीर्थाय । नतेयं वनदेवता ॥ २९ ॥ वने वोपवनेऽमुष्मिन् ।
नंदनोद्याननंदिनि ॥ किमियं मूर्त्तिमाहृत्य । तपःश्रीराश्रयं व्यधात् ॥ ३१ ॥ किं वा वासव-
दत्तेव । व्यसनं मे व्यपोहितुं ॥ इयमस्मिन् वने वास–मुपास्यैवं तपस्यति ॥ ३२ ॥
इति स्मृत्वा प्रियां तत्र । मुक्तकंठं रुरोद सः ॥ नकृणंस्तद्गुणग्राम–तुमुलं विललाप च
॥ ३३ ॥ हा प्रद्योतसुते देवि । त्वया दयितया विना ॥ चक्रवाक इवैकाकी । वराकोऽयमथो
जनः ॥ ३४ ॥ मनसो मे त्वमेवासि । पद्मानंदसंपदां ॥ यद्वा देवि चकोरस्य । चंद्रिकेव र-
सायनं ॥ ३५ ॥ मम त्वया विमुक्तस्य । वनवासः कियानसौ ॥ अस्मि निंद्यो यदद्यापि ।
जीवामि प्रियजीवितः ॥ ३६ ॥ स्निग्धासि त्वं कृशाद्दग्धा । यतस्तेन कृशानुना ॥ तादृग्गाहं
यदद्यापि । न दह्ये विरहाग्निना ॥ ३७ ॥ न्नवत्या वरिवस्या वा । नमस्या वा जिनेशितुः ॥

॥१३२॥

इयं द्वयीगतिमेंऽस्तु । तृतीया तु विडंबना ॥ ३८ ॥ एतच्चेतोहराऽनेक—घनाऽनोकहसंकुलं ॥
उद्यानमनवद्यांगि । हा विना त्वां मरुस्थली ॥ ३९ ॥ लतालास्यकलाचार्यः । पुष्पामोदम-
लिम्लुचः ॥ वनवायुर्वियोगाख्यं । ज्वलनं ज्वलयत्ययं ॥ ४० ॥ विलपंतं तमित्युच्चै—रभ्यधत्त
सुहृत्ततः ॥ अर्धं गृहाण पश्यैता—मनन्यगतिकां पुरः ॥ ४१ ॥ इत्युक्तस्तेन सोऽवादीत् । कु-
र्वन्नस्याः समीहितं ॥ कथं न याति मालिन्यं । देवीलाञ्जफल तपः ॥ ४२ ॥ किंचाद्यैव व्रत-
स्यास्य । वर्द्दते सिद्धिवासर. ॥ विघ्नस्तत्कोऽयमेहीति । मित्रमाकृष्य सोऽव्रजत् ॥ ४३ ॥ त-
तस्तावनुपश्यती—मपश्यंती स्वमीप्सितं ॥ साश्रुनेत्रामिमां वाहौ । गृहीत्वाहमिहागमं ॥
॥ ४४ ॥ स्मरवंदीकृता तस्मै । ताम्यंतीयं कथ मया ॥ निर्वाह्येत्यथ चिंता मां । दहत्यद्द
सप्रति ॥ ४५ ॥ लब्धव्य सखि तल्लब्धं । देवताराधनाफलं ॥ इहावस्थितया कार्यं । तन्मया
किमतःपरं ॥ ४६ ॥ यामोऽधुनेति जल्पंती । प्रतिप्रद्योतनंदिनीं ॥ खेदात्पद्मावती मंदं । च-
लतिस्म मठंप्रति ॥ ४७ ॥ युग्मं ॥ इच्छा सेत्स्यति ते नून—मुत्सुका सखि मास्मभूः ॥ एवं
वासवदत्तापि । तामाश्वास्य सहाऽचलत् ॥ ४८ ॥

तामनुप्रस्थिता साथ्र । कर्णेऽत्रोचत कांचनां ॥ आर्यपुत्रोऽत्र स्वछंद—महो विहरते गिरौ ॥ ४७ ॥ तदत्रैव कचिद्देशे । जिनेशपदपावनं ॥ स किंचित्तीर्थमाश्रित्य । दुस्तपं तपते तपः ॥ ५० ॥ तथैनं तपसा क्लांत—मनन्यमनसं तु यत् ॥ विलापविकलं चैव—मुपेक्षेऽहमलक्षणा ॥ ५१ ॥ ततः प्रक्षीणदाक्षिण्यो । निस्त्रपैकशिरोमणिः ॥ अत्यंतमकृतज्ञश्च । कोऽपि नास्त्येव मत्समः ॥ ५२ ॥ परं वाग्भिरमात्यस्य । गाढं निगमिता सती ॥ पदमप्यधिकं नाहं । ददामि च वदामि च ॥ ५३ ॥ इति प्राप्तप्रियोदंत—परमानंदमानसा ॥ मठमागत्य साऽनैषी—द्धर्मध्यानेन तां निशां ॥ ५४ ॥ विहायसि विहंगानां । कुलायगमनात्मकं ॥ व्यवसाय नृपः सायं । पश्यन्नापत्स्वमास्पदं ॥५५॥ जिनं नाभेयमभ्यर्च्य । स वाह्याभ्यंतरं शुचिः ॥ नृपः समाधिमाधत्त । निस्तरंगमनाः पुरः ॥ ५६ ॥ एकतानमनस्यस्मि—न्नकस्मादात्तविस्मयं ॥ अदभ्रं गर्भगेहांत—रुद्योति ज्योतिरुच्ययौ ॥ ५७ ॥ तेजः पुंजादतो मंक्षु । मूर्त्तिस्फुर्त्तिपरः पुमान् ॥ निर्गत्यात्यंतनिष्कंपं । साऽनुकंपस्तमभ्यधात् ॥ ५८ ॥ विष्टपाधिप तुष्टोऽस्मि । वृणीष्व वरमंजसा ॥ एतस्य त्रिजगद्भर्त्तु—रुपास्तिफलमाप्नुहि ॥ ५९ ॥ जिनस्योपास्तिकर्तृणा—

मनुग्रहकरस्त्वहं ॥ पत्तिरतस्य संजातो । गोमुखः सन्मुखस्तव ॥ ६० ॥
अथ क्रमेण पारीण–समाधिस्तोयधिरिव ॥ स्थिरतं व्यापारयामास । नृपश्चक्षुरपांगतः
॥ ६१ ॥ स लोलकुडलं हारि–हारमंमितमेकतः ॥ पुनस्तदेव जल्पंतं । यक्षमध्यक्षमैक्षत ॥
॥ ६२ ॥ प्रीतिमतं तमालोक्य । जगाद जगतीपतिः ॥ अस्ति यक्ष जिनोपास्तेः । फलं निः-
श्रेयसश्रियः ॥ ६३ ॥ विवेकदेवाकवतां । न स्पृहा त्वैहिके फले ॥ इत्युक्त्वा विरते राज्ञि ।
यक्षोऽन्नाषिष्ट सादर ॥ ६४ ॥ अमोघं हि महोऽमोघ–देवतादर्शनं जवेत् ॥ अतः किंचिद्वृणी-
ष्वेति । यक्षोक्त्या सोऽब्रवीत्पुनः ॥ ६५ ॥ यद्येवं तत्समं देव्या । साम्राज्यं पुनरस्तु मे ॥ इ-
ति तस्य वचः श्रुत्वा । वक्तुं यक्षः प्रचक्रमे ॥ ६६ ॥ एवमस्तु परं राजन् । सुतां माहिष्म-
तीपतेः ॥ विवाह्य ततोऽवश्यं । देवीं राज्यं च लप्स्यसे ॥ ६७ ॥ परिणेतुर्यतो हेतु–र्जगद्व-
न्द्याः स्वलक्षणैः ॥ पद्मावतीति व्याहृत्य । मक्षु यक्षस्तिरोदधे ॥ ६८ ॥ तथैव तस्थुपस्त-
स्य । पश्यतो जिनपुंगवं ॥ आनंदनिःस्यंदमयी । सा विन्नाता विन्नावरी ॥ ६९ ॥ व्यलीय-
त तमः सर्वं । विष्टपस्य च तेऽपि च ॥ पूर्वस्यां च त्वदास्ये च । नूनमुल्लसिता द्युतिः ॥

॥ ७० ॥ अक्षतैः शुचिभिः पूर्णं । स्वर्णस्थालमिवामलं ॥ तदानीं रविमादाय । तं दिनश्री-
रुपस्थिता ॥ ७१ ॥ युग्मं ॥ स्वौवस्तिक इवानंदी । प्रातर्विविधवीरुधां ॥ आददानः सुमन-
सः । पवमानस्तमभ्यगात् ॥ ७२ ॥ ततो वसंतकानीतै-र्विनीतः कुसुमैः प्रभोः ॥ पूजां नि-
र्वर्त्तयामास । मेदिनीशः प्रगेतनीं ॥ ७३ ॥ निशावृत्तांतमावेद्य । तेनाऽप्युक्तं वसंतकं ॥ रंग-
भंगे कृतेऽस्माभि-र्वेत्सि तस्या बभूव किं ॥ ७४ ॥
विषसोऽथ महीनाथं । व्याजहार वसंतकः ॥ तदेव देव विज्ञातं । स्वतः किंचिदिदं म-
या ॥ ७५ ॥ आस्ये यथाऽस्या वैवर्ण्यं । दृशोर्बाष्पोद्गमो यथा ॥ तदा मन्येऽपमानेन । मा-
नसेऽस्याः कृतं पदं ॥ ७६ ॥ मनसाभीप्सितात्पत्यु-रवमानतयातया ॥ न वेद्मि सेयं जी-
वंती । पुनर्दृश्येत वा न वा ॥ ७७ ॥ अभ्युपेतेन पुष्पेभ्यः । प्रातरद्य वने मया ॥ दृष्टा चंप-
कमाला वा । भ्रमंती संभ्रमाकुलं ॥ ७८ ॥ म्लाना चंपकमाले त्वं । मालेव किमु दृश्यसे ॥
इति व्याजेन पृष्टासौ । ममाचष्टेस्म गद्गदं ॥ ७९ ॥ तदा नः स्वामिनी तेन । स्वामिना ते-
ऽपमानिता ॥ गत्वा निःसद्मात्मानं । पर्यंके पर्यमुंचत ॥ ८० ॥ स्वतापेन प्रियस्यांत-र्दाह-

न्नीरुरिवान्नितः ॥ हृदयं स्रवदश्रांन्नः—संन्नारेण सिषेच सा ॥ ८१ ॥ तत्रापि रतिमप्राप्य। मृणालीमालन्नारिणी ॥ सरोजस्रस्तरे शस्ते । निःसहांगा न शेत सा ॥ ८२ ॥ ऊष्मणांगपरिष्वंग—मानेणापि क्षणात्तया ॥ स्रस्तरः स समस्तोऽपि । निर्ममे मुर्मुरोपमः ॥८३॥ चंद्रिका च जलार्द्रा च । नास्यास्तापमलुंपत ॥ चदनव्यजनी व्यक्तं । वीज्यमाना मया तदा ॥ ८४ ॥

सा न चक्रंद नोवाच । नाकुलं विललाप च ॥ मौनेन केवलं तस्थौ । किंचिन्निश्चित्य चेतसि ॥ ८५ ॥ नवीनशयनीयाय । यावत्प्रत्यग्रपल्लवान् ॥ आनयामि न पश्यामि । तावत्तां तत्र स्रस्तरे ॥ ८६ ॥ ध्रुवं तेनापमानेन । मलिनं हंत जीवितं ॥ त्यक्तुं क्वापि प्रयातासौ । वीक्षे तत्तामितस्ततः ॥ ८७ ॥ ततोऽहमेवं संन्नाव्य । स्त्रीहत्यापातकं तव ॥ आत्तपुष्पस्त्वदभ्यर्णे । त्वरितं समुपागम ॥ ८८ ॥ ततः श्रुत्वेति वृत्तांतं । तदुदंतोपलब्धये ॥ वसंतकेन सहितो । धावतिस्म धराधवः ॥ ८९ ॥ तान्निस्तान्निः स वार्त्तान्नि—र्वेर्त्तनीमतिवर्त्तयन् ॥ पद्मावतीपवित्रं न्नू—प्रदेशमविशत्क्षणात् ॥ ९० ॥ इतो वासवदत्तापि । प्रातर्जागरिता सती ॥ पद्मावती गता क्वापी—त्याकर्ण्यान्वेषयद्वने ॥ ९१ ॥

क्रमादन्वेषयंती च । साऽपश्यत्पार्थिवं पथि ॥ हर्षात्कांचनमालां च । फुल्लचक्षुरवोचत
॥ ए२ ॥ तिथिरद्याऽतिथिः श्रीणा–मद्य वारो वरो हले ॥ पवित्रमद्य नक्षत्र–मार्यपुत्रो यदी-
क्षितः ॥ ए३ ॥ आर्यपुत्रेण यत्तप्तं । मत्संगैकफलं तपः ॥ तन्ममाऽजूदगाधोऽय–माधमर्ण्य-
महार्णवः ॥ ए४ ॥ एतस्य वपुराख्याति । क्षामं मद्विरहव्यथां ॥ यद्वाच्यं निर्विकल्पस्य ।
प्रेम्णः सर्वमिदं सखि ॥ ए५ ॥ अद्यापि जागरूकाणि । मम जाग्यानि कानिचित् ॥ यदा-
र्यपुत्रो जीवत्या । जीवन्नेव मयेक्षितः ॥ ए७ ॥ शृण्वंती वचनान्यस्य । पश्यंती रूपमस्य च
॥ पादपांतरिता नव्ये । श्रोत्रनेत्रे कृतार्थतां ॥ ए८ ॥ एवमुक्त्वा तथा चक्रे । स्नेहाद्वासवद-
त्तया ॥ यथा तथापि हि प्रेयान् । प्रेयसीनां प्रियंकरः ॥ एए ॥ तदानीं वार्त्तयामास । नृपो-
ऽप्यथ वसंतकं ॥ जाता कृशानुना तेन । दग्धा देवी दुरात्मना ॥ १०० ॥ मुनिजिर्दैवतैश्चाह
–माश्वास्येव मुहुर्मुहुः ॥ सखे प्रद्योतजा देवी । क्व पुनर्मे मिलिष्यति ॥ १ ॥ किं चैतदपरं
दुःखं । यद्गाहलेशनंदिनी ॥ अधुनांतर्वणं क्वापि । हत्यां मे दातुमुद्यता ॥ २ ॥ तदैव शुश्रुवे
ध्वानं । स्वामिनी हा विपद्यते ॥ सोऽस्ति कश्चिद्य एतस्या–स्त्राता जवेदिहाध्वनि ॥ ३ ॥ ध्व-

नेस्तस्यानुसारेण । धावन्नेष व्यलोकत ॥ माऽतस्तात महावाहो । स्मर्त्तव्येयं सुतात्मनः ॥ ॥ ४ ॥ अमीषा फलमुग्राणा । तपसामस्ति चेत्तदा ॥ वत्सेश्वरः प्रियो मेऽस्तु । प्रेत्यापीत्युक्तिपूर्वक ॥ ५ ॥ रसालतरुशाखायां । बद्धपाशावलंबिनीं ॥ आम्लानवदनांभोज—युतां पश्चावर्ती पुर. ॥ ६ ॥ त्रिभिर्विशेषकं ॥

अनेन साहसेनाल—मलं वाले ब्रुवन्निति ॥ ततोऽसिधेनुमाकृष्य । नृपतिः पाशमच्छिदत् ॥ ७ ॥ वाष्पक्लिन्ननिजक्षौम—मल्लवव्यजनानिलैः ॥ जुपवीज्य स्वयं तस्या । मूर्छाछेदं चकार सः ॥ ७ ॥ अथ सा स्वास्थ्यमास्थाय । पश्यंती जगतीपतिं ॥ किमपि व्याकुलीचक्रे । हर्षौत्सुक्यत्रपामदैः ॥ ए ॥ प्रियास्पर्शरसह्लत्वे । चिरादात्मानमानयत् ॥ वाहुन्यामवलंब्यैना—मन्यधात्तसुधाधिपः ॥ १० ॥ न स्मर्त्तव्यः सरोजाक्षि । पूर्वेद्युर्विहितो मया ॥ अपमानस्त्वया प्रेम । प्रेक्षते हि न विप्रियं ॥ ११ ॥ अद्यप्रभृति कल्याणि । तपोभिस्ते वशंवदः ॥ कृतोऽस्मि तत्फलप्राप्तौ । पर्याप्तं तैरतः परं ॥ १२ ॥ अपि दास्यं त्वदास्यस्य । शीतांशुः स्पृहयत्यय ॥ शंके कथंचिदप्राप्य । लज्जितो गगनं ययौ ॥ १३ ॥ जुत्पलैस्तव नेत्राभ्या—मभ्युपे-

॥ १४ ॥ स्वाधीनेऽपि सुधासिंधौ ।
त्य पराजयं ॥ श्यामीभूतैर्जलस्यांत—र्भंपापातो व्यतन्यत ॥ १४ ॥ स्वाधीनेऽपि सुधासिंधौ ।
त्वद्वचोऽपरनामनि ॥ विदधे विधिधैर्नूनं । मिथ्यापाथोधिमंथनं ॥ १५ ॥ मुनीनां देवतानां चा
—ऽमोघां वाचं समर्थये ॥ दत्ता वासवदत्ता मे । ददता त्वां च वेधसा ॥ १६ ॥ पद्मावती तदा-
कर्ण्य । लेभे मुदमुदित्वरं ॥ दत्तसादं विषादं च । प्रद्योतनृपनंदिनी ॥ १७ ॥ अंशवो हि स-
हस्रांशोः । पंकजिन्याः प्रियंकराः ॥ तेऽप्यहो कैरविण्यास्तु । नितरामप्रियंकराः ॥ १८ ॥ अ-
त्रांतरे जराग्रस्त—समस्तांगः शनैः शनैः ॥ एत्यैकः कंचुकी कंप्रः । पृथिवीपतिमब्रवीत् ॥
॥ १९ ॥ वत्सेश त्वां महाबाहु—नृपः प्रार्थयतेऽधुना ॥ इयं नो दुहिता ताव—त्वामेव पति-
मीहते ॥ २० ॥ अस्यास्तदिच्छां वत्सेश । सफलीकर्त्तुमर्हसि ॥ प्रतिश्रुते त्वया कर्म । कुर्मो
वैवाहिकं वयं ॥ २१ ॥

इत्युक्तवंतमौत्सुक्या—त्तमुवाच वसंतकः ॥ गत्वा ब्रूहि महाबाहु—महीपालं प्रमोदतः ॥
॥ २२ ॥ यथासौ वत्सराजेन । सर्वोऽप्यर्थः प्रतिश्रुतः ॥ तेनेत्युक्तोऽपि नूनत्तुः । कंचुकी मु-
खमैक्षत ॥ २३ ॥ नृपोऽप्यूचे प्रमाणं नः । सर्वत्राग्रे वसंतकः ॥ कदाचनापि नास्माक—मु-

ल्लंघ्यवचनो ह्यसौ ॥ २४ ॥ राज्ञोऽप्येतन्मतं ज्ञात्वा । प्रीतः प्रोवाच कंचुकी ॥ गमनायानु-
जानीहि । राजन् राजसुतामपि ॥ २५ ॥ येनाद्य विजयो नामा । योगो धाम सुखश्रियां
॥ विवाहमंगलारंभ-मस्मिन्ननुज्ञवत्विय ॥ २६ ॥ इतो लग्नं ग्रहैर्दिष्टं । सप्तभिः सप्तमे दिने
॥ विधिर्वा यत्र लयोगा-त्कीर्त्यैः संयोक्ष्यते स्वयं ॥ २७ ॥ इत्युक्ते तेन भूपालः । प्राह प-
द्मावतींप्रति ॥ राजपुत्रि यथानिष्टो । विधिः सर्वो विधीयतां ॥ २८ ॥ प्रतस्थे साज्ञया रा-
ज्ञो । मंदं मंदं स्खलद्गति. ॥ तादृशामीदृशप्रेम्णां । दुस्त्यजः प्रियसन्निधिः ॥ २९ ॥ तत्र
नेत्रातिवर्तिन्यां । शून्यः स्थित्वा क्षणं नृपः ॥ किमत्राऽथोऽस्ति नः कार्य-मिति देवालयं य-
यौ ॥ ३० ॥ प्रद्योतपुत्री श्रुत्वेदं । खेदेनोवाच कांचनां ॥ द्रष्टव्यमधुना दृष्टं । श्रोतव्यं च श्रु-
तं मया ॥ ३१ ॥ अनूपद्मावतीलाभो । यतोऽस्य तपसां फलं ॥ ततः सांप्रतमाहत्यो । मृ-
त्युर्वासवदत्तया ॥ ३२ ॥

प्रद्योतजाऽथ जगदे । तदा कांचनमालया ॥ मास्मगा देवि निर्वेद-मनिर्वेदः श्रियां प-
दं ॥ ३३ ॥ दृश्यतामवधिर्देवि । देवस्य सचिवस्य च ॥ अपकारेऽपि मा मैवं । दर्शयावधि-

रक्षंती
मात्मनः ॥ ३४ ॥ समं सुबाहुसुतया । गुप्ताकारेंगिता सती ॥ विवाहं पश्य देवस्य । रक्षंती
चक्षुरादरात् ॥ ३५ ॥ तदेहि देवि गच्छंत्या । गम्यते सममेतया ॥ इति कांचनया निन्ये । प-
झावत्यंतिकेऽथ सा ॥ ३६ ॥ कथं सखि चिराद् दृष्टे—त्यालप्य स्नेहनिर्भरं ॥ पद्मावती तदा-
चख्यौ । सर्वं प्रद्योतजन्मनः ॥ ३७ ॥ सखि त्वत्कांक्षिते सिद्धे । सिद्धं मे सर्वमीप्सितं ॥ इ-
त्यवंतीशनंदिन्या । वचसा साऽन्यनद्यंत ॥३८॥ तत्रापि सहवास्तव्यं । जनमापृच्छ्य वत्सला
॥ पद्मावती ययौ पुर्यां । समं वासवदत्तया ॥ ३९ ॥ सौधमागत्य सा भक्त्या । पित्रोः पा-
दाववंदत ॥ तौ भवेर्वीरपत्नीति । तस्यां ददतुराशिषं ॥ ४० ॥ नयविक्रमसंपन्नः । क्व मे बं-
धुः सुदर्शनः ॥ इति पृष्टस्तया हृष्टो । विष्टपाधीश्वरोऽवदत् ॥ ४१ ॥ अस्मै पत्ये यदा पुत्रि ।
तपस्तप्तुं वनेऽन्यगाः ॥ रुमण्वानस्य सेनानी—स्तदानीं मामुपागमत् ॥ ४२ ॥ उत्पाटयामि
पांचालं । नद्योघ इव पादपं ॥ त्वं घनः स्याः सहायश्चे—देवं मे स व्यजिज्ञपत् ॥ ४३ ॥ त-
तः सारबलः सोऽयं । न्यायादर्शःसुदर्शनः ॥ कौशांबीं प्रहितोऽस्माभिः । समं तेन रुमण्वता ॥
॥ ४४ ॥ भर्तुरभ्युदयोंकार—मद्यैवायं सुलक्षणे ॥ पंचालविजयोदंतं । कर्णोत्तंसी करिष्यसि

॥ ४५ ॥ ततो विहितसंचारै–र्वैवाहिककुतूहलैः ॥ मान्याभिः कुलवृद्धाभिः । सा सम्यक् सम-
योज्यत ॥ ४६ ॥ वनाद्वत्सेशमाहूय । प्रतीहारमुखात्ततः ॥ प्रासादे स्थापयामास । जन्य-
यात्रोचिते नृपः ॥ ४७ ॥ प्रैमैकलग्नके लग्ने । तावन्योऽन्यमनोहरौ ॥ आडंबरेण महता । म-
हाबाहुर्व्यवाहयत् ॥ ४८ ॥ ततो माहिष्मतीनाथः । कौशांबीभर्तुरादरात् ॥ अर्चामत्युन्नतां
चक्रे । पाणिमोचनकर्मणि ॥ ४९ ॥ तदा वासवदत्तापि । तमपश्यत्तिरोहिता ॥ रम्यैरुलूलक-
ल्लोलैः । कलितोत्साहमुत्सवं ॥ ५० ॥ वधूवरस्य तस्यैवं । सत्यानंदमये महे ॥ कौशांब्याः
पथ्रनो नामा । वेगादागान्निजः पुमान् ॥ ५१ ॥ पंचालः पंचतां नीतः । कौशांबी च करे
धृता ॥ वर्द्धसे देव दिष्ट्येति । स वत्सेशमवीवृधत् ॥ ५२ ॥ एतद्विस्तरतो भद्र । श्रोतुमिछा-
मि संप्रति ॥ एवमाज्ञापितो राज्ञा । मूलतः स व्यजिज्ञपत् ॥ ५३ ॥ निदेशेन महाबाहोः ।
सह तेन रुमण्वता ॥ उपागत्योपकौशांबीं । समवासीत्सुदर्शनः ॥ ५४ ॥ अंतःकृतपरीरंभं ।
तन्मातंगमदांबुभिः ॥ कलयामास कालिंद्याः । पुनरुक्ताऽसितां द्युतिं ॥ ५५ ॥ सिकताकोम-
ले स्वैरं । तस्याश्वीयेन वेल्लता । कालिंदीपुलिनेऽपोढा–चक्रे चंक्रमणक्लमः ॥ ५६ ॥ तत्र म-

ज्ञच्चमूचारु–लोचनास्तनचंदनैः ॥ तत्राप्याविर्भवद्गंगा–संगेव यमुना बभौ ॥ ५७ ॥ कालिं-
दीसीकरासार–सारवाही समीरणः ॥ श्रमव्यपगमं चक्रे । युद्धश्राद्धभुजो भटान् ॥ ५८ ॥
अथ पंचालभूपालः । सिंहनादेन रोदसीं ॥ पूरयन्निर्ययौ पुर्या । गुहाया इव केसरी ॥५९॥
सहानीकमनीकन्या । सरंगश्चतुरंगया ॥ अरौत्सीदुत्सुको योद्धुं । स दुर्दर्षः सुदर्शनं ॥ ६० ॥
स्वीकृतोच्चरणारंभः । ससंरंभः सुदर्शनः ॥ अतुल्यशौर्यः प्रत्यैच्छ–द्रत्नो रत्नसेन तं ॥ ६१ ॥
शरं धनुषि संधाय । वधाय तव वैरिणः ॥ सुदर्शनः पुनर्धावन् । प्रत्यषेधि रुमण्वता ॥६२॥
वत्साधिप च भटोत्तंस । यदेतद्गगनांगणे ॥ रजः कपोतपोताभं । पूर्वस्यां दिशि दृश्यते ॥६३॥
तन्मन्येऽनन्यसामान्यौ । सुतौ प्रद्योतभूपतेः ॥ बलौ गोपालपालाख्या–वभ्यायातस्त-
तोऽरिभिः ॥ ६४ ॥ ततः क्षणं प्रतीक्षस्व । कुमार स्फारविक्रम ॥ इति तस्मिन् वदत्येव । ध्व-
जैर्यातं दृशोः पथि ॥ ६५ ॥ ततो नलगिरिर्नाम । गजरत्नमदृश्यत ॥ बलं मालविकं सर्व–
मथ वेगादुपागमत् ॥ ६६ ॥ एकतो देव सन्नद्ध–सर्वसैन्यः सुदर्शनः ॥ अन्यतः पालगोपालौ
। रिपुमावृत्य तस्थतुः ॥ ६७ ॥ अनीकान्यभितः पश्यन् । साक्षाद्वीरशिरोमणिः ॥ पंचालपृ-

त्रिवीपाल–श्चुक्रोन्न न मनागपि ॥ ६८ ॥ प्रत्युत तनुरुत्फुल्ला । विलोलत्पुलकांकुरा ॥ व-
न्न्व तस्य सन्नाद–संत्रुटत्सधिवंधना ॥ ६९ ॥ गोपालाध्युषितस्याथ । विंध्यशैलसमाकृतेः ॥
कृतो नलगिरेस्तेन । स्वकीयः संमुखः करी ॥ ७० ॥ शिलासंघातनामानं । महेन्न्मधितस्थु-
पः ॥ सुदर्शनस्य सामुख्यं । पंचालेशानुजो ययौ ॥ ७१ ॥ प्रभुन्निः श्लाघ्यमानाना । कुंता-
कुंति शराशरि ॥ तेषा वलानामन्योऽन्यं । ववृद्धे दारुणो रणः ॥ ७२ ॥ हेषितैः पोषितोऽत्यं-
त । वृंहितैरुपवृंहितः ॥ तदानीं व्यानशे दूरा–द्देशे निःस्वाननिःस्वनः ॥ ७३ ॥ रणतूर्यानु-
गामी च । रणरंगोन्नटैर्न्नटैः ॥ वितेने मडलाग्राणां । तांडवाम्बरस्तदा ॥ ७४ ॥ न्नटः प्रति-
न्नट कश्चि–त्पुनराहंतुमुद्यतं ॥ आदायासिमनायासं । पतितोऽपि न्यपातयत् ॥ ७५ ॥ ये-
नारिणा शिरश्छिन्नं । तत्र सूरस्य कस्यचित् ॥ तं हत्वा तत्कवधेन । वैरनिर्यातनं कृत ॥७६॥
अनीकं नैकमन्येन । शौण्डीर्यादत्यशय्यत ॥ तज्जयश्रीः समं प्राप–ज्ञ्नयत्र गतागतैः ॥ ७७ ॥
एक एव त्रिशेषोऽन्नू–त्तदारातिवले महान् ॥ कुतोऽप्यागत्य यन्नृद्दे–रेकच्छायमतन्यत ॥ ७८ ॥
सुदर्शनकुमारेण । सेनान्या च रुमण्वता ॥ ततः प्रापि च पंचत्वं । पंचालक्षितिपानुजः ॥७९॥

अथास्मिन्नंतरे योद्धुं । कश्चिदावंतिकाद्बलात् ॥ गंधसिंधुरमारूढः । प्रौढश्रीः समुपागतः
॥ ८० ॥ शौंडीर्यात्तिर्यगागत्य । शरं संधाय धन्वनि ॥ पंचालमवनीपालं । तं साक्षेपमेवोच-
त ॥ ८१ ॥ शून्यामालंब्य कौशांबीं । किमु पांचाल दृप्यसि ॥ किं गुहायामसिंहायां । स्फु-
रंति न हि फेरवः ॥ ८२ ॥ असि त्वं हास्तिकप्राय–पृतनः पृथिवीपतिः ॥ वत्सेश्वरस्य नृ-
त्येषु । संख्यायाः पूरकस्त्वहं ॥ ८३ ॥ ततो वत्सेशनृत्यस्य । पंचालाधिपतेस्तथा ॥ द्वयो-
रायोधनेऽमुष्मि–न्नंतरं ज्ञास्यतेऽधुना ॥ ८४ ॥ यतोऽपराध्य कौशांब्या । जातोऽस्युपपतिस्त-
तः ॥ प्रायश्चित्तप्रदस्तुभ्यं । तदेष विशिखोऽस्तु मे ॥ ८५ ॥ इत्युक्त्वाथ रिपुं कोपा–द्वज्रघा-
रद्दढं तदा ॥ मुदा मुमोच नाराचं । नवक्ष्मः स कश्चन ॥ ८६ ॥ शरः प्रविश्य वामेन । कु-
क्षिणा दक्षिणेन च ॥ निर्ययौ वैरिणः कुर्व–न्नात्मानुपदिकानसौ ॥ ८७ ॥ आत्मीयानां परे-
षां च । सैनिकानां मुखेंदुषु ॥ ज्योत्स्ना च दर्शरात्रिश्च । संजाते युगपत्तदा ॥ ८८ ॥ कृतेऽ-
रिनिग्रहे तस्मिन् । विस्मितैः सैनिकैर्दृशः ॥ व्यापारिताः परं वर्मा–च्छादितोऽसौ न लक्षितः
॥८९॥ ततः पंचालसप्तांगी–मंगीकृत्य रुमण्वता ॥ सराजन्येन कौशांबी । गत्वामध्यमधिष्ठिता

॥ ९० ॥ तदेतस्य स्वरूपस्य । वेगतो भक्तिमानिना ॥ विज्ञापनाय देवस्य । प्रहितोऽस्मि रु-
मण्वता ॥ ९१ ॥ सोत्कंठो देवपादाना—मवदातपराक्रमः ॥ अचिरेणैव सेनानीः । स्वयं सो-
ऽपि समेष्यति ॥ ९२ ॥ इत्याख्यातवते तस्मै । वसनाभरणादिकं ॥ वत्सराजः समुद्भूत—
प्रमोदः प्रददौ तदा ॥ ९३ ॥ नृपायावेदयामासुः । काले वैतालिकास्तदा ॥ लक्ष्मा माध्यंदिनी
चेयं । सुखाय तव जायतां ॥ ९४ ॥ दत्वा क्षोणीभृतां मूर्ध्नि । पादानुद्दाममंडलः ॥ गभस्ती-
नां पतिस्तेज—स्तनोति त्वमिवाधुना ॥ ९५ ॥ गिरं कर्णातिथीकुर्व—स्तामानंदेन वंदिनां ॥ आ-
हूयत महाबाहु—पुरुषैर्भुक्तये नृपः ॥ ९६ ॥ ततो रचितदेवार्चः । श्वसुरेण सगौरवं ॥ वत्सा-
नामीश्वरः प्राज्यै—र्नानाभोज्यैरभोज्यत ॥ ९७ ॥ उपातविहितोन्निद्र—मंद्रसंगीतसंपदि ॥ वि-
श्राम्यतिस्म पल्यंके । स पल्यंको नृपश्रियः ॥ ९८ ॥ तदा पद्मावती पत्यु—र्जयोदाहरणं र-
हः ॥ आख्यातिस्म सखीस्नेहा—त्प्रद्योतदुहितुः पुरः ॥ ९९ ॥ अवंतीशसुताऽप्येता—मश्ला-
घत यथा सखि ॥ सुलक्षणेऽसि यज्जर्तु—रूढैवाभ्युदयं व्यधाः ॥ १०० ॥ तयेत्थं प्रस्तुतश्लाघा—
चेदिराजतनूरुहा ॥ व्यज्ञप्यत कुतोऽप्येत्या—ऽद्भुतं चंपकमालया ॥ १ ॥ येन न्यासीकृता पू-

र्व—मियं प्रियसखी तव ॥ देवि स्मेरमुखांभोजः । स द्विजो द्वारि वर्त्तते ॥ २ ॥ तमिति वच-
सा देव्याः । सा तं प्रावीविशत्ततः ॥ न्यवीविशच्च सौत्सुक्य—मानीते स्वयमासने ॥ ३ ॥
इयमार्यं नमस्यामि । भवंतमिति वादिनी ॥ प्रणयान्नमयामास । तस्य पद्मावती शि-
रः ॥ ४ ॥ भवेरविधवा नित्यं । मुदा भूपालनंदिनि ॥ इत्याश्वास्य प्रसन्नास्य—स्तामभापत
स द्विजः ॥ ५ ॥ समपद्यंत पद्माक्षि । सर्वा मे कार्यसिद्धयः ॥ तदिदानीं सतीसारं । स्वसा-
रं मे समर्पय ॥ ६ ॥ अभूस्त्वं च ममाशीभि—र्यथा पूर्णमनोरथा ॥ पत्या निजेन संयुज्य ।
तथेयमपि जायतां ॥ ७ ॥ तेनेत्युक्ताऽथ व्यक्ताश्रु—रूचे पद्मावती सखि ॥ सुचिरं सज्जनैर्योगं
। सहते न हतो विधिः ॥ ८ ॥ आकारयति बंधुस्त्वां । भर्त्तुः संगाय गम्यतां ॥ एवं वासवद-
त्तां सा । विससर्ज कथंचन ॥ ९ ॥ ततोऽल्पेतरसंकल्पा—मतिम्लानमुखांबुजां ॥ प्रद्योतजामु-
पादाय । ययौ यौगंधरायणः ॥ १० ॥ वत्सेश्वरोऽथ संध्यायां । कृतसंध्याविधिक्रमः ॥ पद्मा-
वत्यासमं रम्यं । वासागारमुपागमत् ॥ ११ ॥ मुक्तपल्यंकमालोक्य । प्रातरुन्मनसं नृपं ॥
समुवाच वचोयुक्ति—रत्नयुक्तो वसंतकः ॥ १२ ॥ प्रियां प्रेमवतीं प्राप्तः । पूर्वराज्यश्रियं तथा

॥१४८॥

॥ तथाप्येवं कथं देव । नितरां दुर्मनायसे ॥ १३ ॥ इति पृष्टः क्षितेर्भर्त्ता । व्याहर्तुमुपचक्रमे
॥ वयस्य दौर्मनस्यं मे । किं जानन्नपि पृच्छसि ॥ १४ ॥ किं लक्ष्म्या किमु कौशांब्या । प-
द्मावत्याऽथवा किमु ॥ मम मानसविश्राम—धाम प्रद्योतजा न चेत् ॥ १५ ॥

किं चाद्य तां पुरस्कृत्य । किंचित्स्वप्नायितं मया ॥ सुमुखी विमुखीभूता । महाबाहोः
सुताप्यतः ॥ १६ ॥ तद्ध्यानरुद्धपद्मत्रष्टो । जीवितुं न क्षणं क्षमः ॥ गत्वाग्रे गोमुखस्यैव । ततो-
ऽसून् विसृजाम्यहं ॥ १७ ॥ इत्युक्त्वाऽचलदुर्वीभृ—द्भाग्नेयभुवनंप्रति ॥ वर्द्धमानमनोमन्यु—र
न्वगात्तं वसंतकः ॥ १८ ॥ वंचयित्वाथ भूनाथ । स किंकर्त्तव्यताजडः ॥ रह. संमुखमागत्य
। प्रोचे कांचनमालया ॥ १९ ॥ विज्ञाति मे भवन्मंत्रः । पर्यंतविरसोऽधुना ॥ अगाधमंबुधिं
तीर्त्वा । गोष्पदे यन्निमज्जथ ॥ २० ॥ भद्रे कथमिवेत्युक्ता । तेन साऽकथयत्पुनः ॥ देवी स्वां-
तिकमानीता । मंत्रिणा ह्यस्तने दिने ॥ २१ ॥ निपत्य पादयोस्तेन । सा व्यज्ञप्यत सादरं ॥
क्लेशोऽयमादृतो देवि । सर्वो मद्वचसा त्वया ॥ २२ ॥ कल्याणि फलितः सोऽद्य। राज्यस्य पु-
नराप्तितः ॥ तद्देवस्य स्वसंगेन । राज्यलक्ष्मीं कृतार्थय ॥ २३ ॥ ततः प्रद्योतजा देवी । वद्दरो-

याऽवज्ञापत ॥ पर्याप्तं प्रश्रयालाप–प्रलापैरेभिरार्य मे ॥ २४ ॥ अपकृत्येति नोतिज्ञ । यदियं विनयक्रिया ॥ तदिदं नासिकां लूत्वा । दुकूलेन प्रमार्जनं ॥ २५ ॥ पद्मावतीमिमां यत्ना–त्सपत्नीं मम कुर्वता ॥ साधु साधु त्वयाऽमात्य । कृते प्रतिकृतं कृतं ॥ २६ ॥ शंकरायाः प्रयोगो हि । नियतं त्वन्निबंधनः ॥ यदीदृशेषु कार्येषु । नान्यस्य क्रमते मतिः ॥ २७ ॥ ममैतच्चु दिवानक्त–मंतः प्रथयति व्यथां ॥ अन्नूवमार्यपुत्रस्य । यदहं क्लेशहेतवे ॥ २८ ॥ अयं हि कंटकाकीर्णा–मरण्यानीमशिश्रयत् ॥ मत्कृते च क्षुधोदन्य–ज्ञावमन्वज्ञवल्लभं ॥ २९ ॥ त्वदीयवचसा राज्यं । त्यज्यंत्यां मयि सर्वथा ॥ अगाधे व्यसनांभोधौ । प्रेमसज्जो ममज्ज सः ॥ ॥ ३० ॥ तदेवाहमनेकेषां । दुःखानामस्य कारणं ॥ सांप्रतं प्रोषितेष्वेषु । सिद्धं मे पुनरीप्सितं ॥ ३१ ॥

इदानीं यदसौ जज्ञे । राज्यलक्ष्मीस्वयंवरः ॥ पद्मावत्या महाप्रेमां–भोरुहभ्रमरायितः ॥ ३२ ॥ प्रपद्यंते यतः पत्यु–र्दुःखे दुःखं सुखे सुखं ॥ सदोदयव्ययाः शश्व–द्योषितः पतिदेवताः ॥ ३३ ॥ तीर्थं गत्वार्यपुत्रस्य । तपोभिः पावनीकृतं ॥ साधीयं साधयाम्येषा । तदहं

स्वसमीहितं ॥ ३४ ॥ अन्निवार्येति तत्तीर्थे–मन्निसंधाय सत्वरं ॥ चलिता गलितानंद–मित्यूचे सचिवेन सा ॥ ३५ ॥ देवि प्रसीद सीदंति । मादृशाः सत्यपि त्वयि ॥ चङ्किकायामसांशयां । दुनोत्येव च कोरकः ॥ ३६ ॥ हितकारी न देयः स्याद्–दूरं दुःखाकरोऽपि चेत् ॥ निर्दोष एव दोषज्ञो । रोगिणां लंघयन्नपि ॥ ३७ ॥ तदेषस्तव जंतुश्च । तव चोन्नतिहेतवे ॥ ममापराधाः सर्वेऽपि । पर्वेंदुमुखि जज्ञिरे ॥ ३८ ॥ पद्मावत्याः पतिर्यः स्या–त्स लब्धा सार्वभौमतां ॥ इति नैमित्तिकस्तथ्य–मादिदेश ममैकदा ॥ ३९ ॥ जंतुरभ्युदयोत्कर्ष–प्रथमानमनोरथः ॥ ततः पद्मावतीयोग–प्रयोगमहमानयं ॥ ४० ॥ एवमप्यपराधश्चे–त्त्वया मनसि मन्यते ॥ युगंधरसुतस्यापि । मरणं शरणं ततः ॥ ४१ ॥

इत्युक्तापि यदा देवी । ददौ किंचन नोत्तरं ॥ मृत्यवे सचिवस्तस्या । निश्चिक्ये निश्चय तदा ॥ ४२ ॥ शुचिमर्शं शुन्नोपाय–मात्मीयं मंत्रनाटकं ॥ दृष्ट्वा विरसनिर्वाहं। मंत्री खड्गमुपाददे ॥ ४३ ॥ ततो देवीममात्यं च । मरणैकविनिश्चयौ ॥ विज्ञाय व्याकुला वेगा–दागतास्मि तवांतिक ॥ ४४ ॥ आगत्य तत्र चेद्देवो । देवीमनुनयत्यसौ ॥ संन्नाव्यंते शुन्नोदर्का

। न्नवन्मंत्रास्तदा यदि ॥ ४५ ॥ इमामाड्रियते देवो–ऽप्यथेदानीं तथा कुरु ॥ ते ह्यात्ता यान-
पात्राणि । ये प्रन्नोर्व्यसनार्णवे ॥ ४६ ॥ इति व्याहृतवृत्तांता–मुवाच च वसंतकः ॥ तदेवं कु-
र्वतः शांतिं । वेतालोद्यानसन्निन्नां ॥ ४७ ॥ देवोऽपि विरहे देव्या । राज्यं संत्यज्य दूरतः ॥
पुनर्गत्वा तपस्तीर्थे । प्राणान् परिजिहीर्षति ॥ ४८ ॥ तत्रोपेतः समं देव्या । देवः संयोक्ष्य-
ते स्वतः ॥ अन्ये नाऽनुनयंत्येतौ । प्रेमैवाध्यापयिष्यति ॥ ४९ ॥ तत्त्वं व्रज जवान्नद्रे । मा
विशणमुखीस्म न्नूः ॥ यतेथास्तु तथा किंचि–द्यथा देवो विलंबते ॥ ५० ॥

एवमाश्वासिता तेन । वेगाद्वनमुपेयुषी ॥ वत्सराजपटागारे । स्वामिन्या समगंस्तथा
॥ ५१ ॥ तदा प्रद्योतजा तत्र । वत्सराजमपूजयत् ॥ मूर्ध्नि बद्धांजलिश्चैवं । विनयेन व्यजिज्ञ-
पत् ॥ ५२ ॥ आर्यपुत्र परत्रापि । लोके शोकतमोऽपहः ॥ प्रियस्त्वमेव मे न्नूयाः । प्रार्थये
न ह्यतः परं ॥ ५३ ॥ इत्युदीर्यावरोहंती । प्रासादान्नृपनंदिनी ॥ विज्ञा विज्ञपयांचक्रे । कां-
चना रचितांजलिः ॥ ५४ ॥ यदितो दृश्यते देवि । शृंगमभ्रंलिहं गिरेः ॥ देवस्येयं तपोन्नूमिः
। सर्वकल्याणकारणं ॥ ५५ ॥ इह हि श्रूयते शश्व–दादिनाथः कृतस्थितिः ॥ व्यसनानि

व्यलीयते । यत्र नेत्रपथातिथौ ॥ ५६ ॥ तयैवं साधितोत्साहा । राज्ञी वेगादुपाययौ ॥ त्रिलोकीस्वामिनं तत्र । विनयेन ननाम च ॥ ५७ ॥ शुद्धेदशरयूतीरे । गत्वा प्रद्योतजा ततः ॥ चिता विरच्यतामत्रे–त्यूचे यौगंधरायणं ॥ ५८ ॥ मंत्री जगाद देवि त्वं । यद्येवं कृतनिश्चया ॥ निश्चितं तत्फलिष्यति । पिशुनानां मनोरथाः ॥ ५९ ॥ दग्धा प्रदीपने देवी । दुर्वृत्तेन कृशानुना ॥ शुद्धान्वयोऽन्वगादेनां । भक्त्या यौगंधरायणः ॥ ६० ॥ इति वार्त्ता मया लोके । यन्मिथ्योद्भाविता पुरा ॥ इदानीं तदिमां देवि । सत्यां कर्त्तुं प्रवर्त्तसे ॥ ६१ ॥ युग्मं ॥ इत्याख्याय विनीताख्यं । स पदातिं समादिशत् ॥ भद्र भूयोऽभिधायेति । रुचिरारच्यतां चिता ॥ ६२ ॥ ततस्तेन विनीतेन । यथादिष्टमनुष्ठितं ॥ अथ प्रद्योतजा तस्या–माशुशुक्षणिमक्षिपत् ॥ ६३ ॥ आर्द्रेंधनोद्धधूम्याभि–स्तथासौ व्यानशे दिशः ॥ यथा दुर्दिनभावत्वा–द्वस्तुव्यक्तिर्न लक्षिता ॥ ६४ ॥ राज्ञी प्रदक्षिणीकर्त्तुं । चितां प्रववृत्ते ततः ॥ पृष्ठवर्त्ती विषादार्त्तः । सचिवग्रामणीरपि ॥ ६५ ॥

इतो वत्सेश्वरोऽप्येत्य । जिनं सम्यक् प्रणम्य च ॥ खेदाद्विवर्णवदन–मभ्यधत्त वसंतकं

॥ ६६ ॥ सखे पुरः सखेदोऽपि । चितामारचयोचितां ॥ येन प्रद्योतजाक्रोडे । क्रीडामनुभ-
वाम्यहं ॥ ६७ ॥ वसंतकोऽवददेव । चितां कर्तुं न वेद्म्यहं ॥ तत्सवैकसहायोऽस्मि । मा मे
कर्मेदमादिश ॥ ६८ ॥ नृपतिस्तद्वचः श्रुत्वा । मत्वा दुर्लभमिप्सितं ॥ दिक्षु व्यापारयंश्चक्षुः
। पुरः पावकमैक्षत ॥ ६९ ॥ तत्समीपमुपागत्य । धूमांधतमसावृतः ॥ रत्नसेन समारेभे ।
नृपतिस्त्रिःप्रदक्षिणां ॥ ७० ॥ आत्मनोऽग्रेसरं दृष्ट्वा । विष्टपेंद्रं नृपात्मजा ॥ तदा सकोपकां
वाच–मुवाच सचिवाग्रगा ॥ ७१ ॥ पुरुषाकृतिरार्यार्य । कोऽप्यसावग्रतः स्मरः ॥ चितायां भ-
वत्पुरो वेगा–द्विविक्षुरिव दृश्यते ॥ ७२ ॥ तदसौ प्रविशंस्तस्यां । झगित्येव निवार्यतां ॥ भ-
विष्यत्यस्य संपर्का–त्पावकोऽयमपावकः ॥ ७३ ॥ इत्युक्तः स तया मंत्री । नृपं वीक्ष्योपल-
क्ष्य च ॥ जगाद जगतीनाथ । कथा मम निशम्यतां ॥ ७४ ॥ परिणेतुर्वियोगेन । दुःखितेयं
मम स्वसा ॥ अह्नायास्मिन् चितावह्नौ । प्राणमोक्षं चिकीर्षति ॥ ७५ ॥ तदन्यत्र धरित्रीश
। गत्वाऽग्निप्रेतमाचर ॥ संतो जातु परार्थस्य । नहि प्रत्यूहहेतवः ॥ ७६ ॥ तेनेति व्याहृतो-
त्साहो । तत्प्रभुरचिंतयत् ॥ नाद्यापि भागधेयानि । विधेयानि भवंति मे ॥७७॥ यत्समी-

दा ममेदापि । नाऽपूर्यंत कथंचन ॥ प्रपद्य तच्छिरः शृंगा—त्प्राणान्निर्वासयाम्यदं ॥ ७८ ॥ वि-
चिंत्येत्यचलत्किंचि—द्राजा यावज्जवात्ततः ॥ स्मित्वा तावज्जगादैनं । बाहौ धृत्वा वसंतकः ॥
॥ ७९ ॥ नृभिदेवमिमं देव । स्वानुगं वेत्सि कोऽस्त्यसौ ॥ न जानामीति राज्ञोक्ते । पुनरू-
चे वसंतकः ॥ ८० ॥ तवार्थे प्राप्तिक्लेशः । सोऽयं यौगंधरायणः ॥ येन चेदिनृपानीकं । स-
मानाय्य रुमण्वता ॥ ८१ ॥ स्वयं चावंतीनृजर्तुः । सैन्यमादाय दुर्धरं ॥ अधिसंग्राममुज्ञाय
। इतः पंचालनृपतिः ॥ ८२ ॥ युग्मं ॥ ततः प्रत्यभिजिज्ञासु—र्भूयो नर्मा द्विजोत्तम ॥ स-
र्वांगीणं तमालिंग—द्वंन्नोजसदृशा दृशा ॥ ८२ ॥ अभितः प्रत्यभिज्ञाय । निजं तं सचिवो-
त्तमं ॥ जगाद राजा दृष्टोऽसि । दिष्ट्याऽमात्यशिरोमणे ॥ ८३ ॥ साध्वमात्य त्वया चक्रे ।
यत्प्राणाः परिरक्षिताः ॥ इदं नृपोऽपि मे राज्यं । त्वयि जीवति जीवितं ॥ ८४ ॥

इत्यालापोल्लसत्प्रीति—बाष्पायितविलोचनः ॥ पपात पादयोर्वत्स—नृपतेर्मंत्रिपुंगवः ॥
॥ ८५ ॥ तदा विज्ञातवृत्तांता । प्रियस्यानुपदं जवात् ॥ आगात्पद्मावती तत्र । यत्र प्रद्योतनं-
दिनी ॥ ८६ ॥ चिताशुशुक्षणेस्तां च । वीक्ष्यारब्धप्रदक्षिणां ॥ इयं प्रियसखी सा मे । कथं

॥१५५॥

पद्मावति पतिं त्यक्त्वा
सेतीत्यचिंतयत् ॥ ८८ ॥ इति चिंतापरामेता–मूचेऽवंतीनृपात्मजा ॥ प्रिया
। कथमत्र त्वयाऽऽगतं ॥ ८९ ॥ पद्मावती ततोऽवादीत् । सखि सत्यं निशम्यतां ॥ प्रिया
वासवदत्तास्य । या दग्धा प्राक् प्रदीपने ॥ ९० ॥ मनस्यस्ति प्रिया सैव । वाचि तन्नाम के-
वलं ॥ तस्य चित्रेषु तद्रूप–लिखनं कायिकी क्रिया ॥ ९१ ॥ निमंत्रितः स मित्रेण । कौशां-
वीराज्यभुक्तये ॥ किंतु तस्या वियोगेन । खिन्नस्तन्नान्वमन्यत ॥ ९२ ॥ प्रियां प्रत्युत तामे-
व । प्रेत्यापि प्राप्तुमुत्सुकः ॥ तीर्थेऽस्मिन् प्राणमोक्षार्थ–मागतोऽस्त्यग्रतो मम ॥ ९३ ॥ अ-
हमप्यधुना तस्य । पंथानमनुवर्त्तितुं ॥ आयातास्मि कुलीना हि । वनिताः पतिवर्त्मगाः ॥९४॥
इत्याख्याते तया दध्यौ । प्रद्योतदुहिता हृदि ॥ अद्याऽप्यनुपमप्रीति–रार्यपुत्रो मयि
ध्रुवं ॥ ९५ ॥ पद्मावतीं च राज्यं च । महीं संत्यज्य संप्रति ॥ मत्कृते विहितायासः । प्रा-
णानपि जिहासति ॥ ९६ ॥ यश्च प्रदक्षिणीकर्त्तुं । प्रावर्त्तत चितामिमां ॥ ममैव स प्रियः शं-
के । धूमेन तु न लक्षितः ॥ ९७ ॥ मया निराकृतोऽत्यंतं । मृत्यवेऽप्युत्सुकस्तदा ॥ असौ य-
दि निवर्त्तेत । ततः स्यान्मम वांछितं ॥ ९८ ॥ इतश्चोच्चाय तं श्लिष्य–न्मंत्रिणं मंत्रिवल्लभः

॥ राजा जगाद केयं ते । स्वसाऽमात्य मुमुर्षति ॥ ९९ ॥ सचिवो व्याहरद्देव । त्वत्कृताद-
पमानतः ॥ देवी वासवदत्तेयं । चितावह्नौ विपद्यते ॥ १०० ॥ अज्ञापत ससंरंभं । नृपश्चित्र-
मद्दो मद्दत् ॥ कथं पूर्वं विपन्नापि । पुनर्देवी विपद्यते ॥ १ ॥ द्रुतमेत्य स्वयं देवीं । दृष्ट्वा कुरु
यथोचित ॥ इत्युक्तो मंत्रिणा नृपः । प्रत्यावृत्तश्चितांतिके ॥ २ ॥ तत्र प्रत्यक्षमद्राक्षी—न्नृपः
प्रद्योतजां स्वयं ॥ चिंतयतीं किमप्यंतः । पद्मावत्या समन्वितां ॥ ३ ॥ इयं वासवदत्तेति ।
नृपतिर्निश्चिकाय तां ॥ प्रत्यक्षाद्धि परं नास्ति । संदेहानामपोहकं ॥ ४ ॥ अथालपाप नृपा-
लः । प्रेयसीं तां प्रियोक्तिभिः ॥ दर्शं प्रद्योतजे देवि । देहि देह्याकुले मयि ॥ ५ ॥ कश्चिद्य-
श्चापमानस्ते । मया देवि प्रदर्शितः ॥ सोऽपि त्वद्दानलोभेन । प्रिये न पुनरन्यथा ॥ ६ ॥
निमेषमपि वामाक्षि । मम चेतसि विस्मृता ॥ एतास्तदा सदाक्षिण्ये । साक्षिण्यः कुलदेवताः
॥ ७ ॥ तत्प्रसीद प्रिये मह्यं । चितया कृतमेतया ॥ सत्योऽस्तु गोमुखो यक्ष—स्तपोऽप्यस्तु
फलेग्रहि ॥ ८ ॥

इत्युक्त्वा विरते राज्ञि । धूमोर्मौ च निदेलिमे ॥ प्रत्यभिज्ञाकृते पत्यु—र्देवी व्यापारय-

द् ददर्श ॥ ९ ॥ दृष्टिर्वासवदत्तायाः । प्रीत्या प्रत्यभिजानती ॥ रमणस्यांगरंगांतः । खेलति-
स्म यदृच्छया ॥ १० ॥ निर्णीय परिणेतारं । स्मृत्वा पद्मावतीवचः ॥ विससर्जाश्रुरूपेण । सा-
ऽपमानं स्वमानसात् ॥ ११ ॥ अयं मानज्वरावेग-व्यथाव्यपगमस्तदा ॥ अवेदि स्वेदनिःस्यं-
दा-दंगैस्तस्या विशारदैः ॥ १२ ॥ प्रियालापघनौघाच्च । सिक्तोऽस्याः प्रेमपादपः ॥ रोमांच-
निचयव्याजा-दमुंचदिव कोरकान् ॥ १३ ॥ पतिलावण्यपीयूष-पानपीनवपुस्ततः ॥ सा ज-
गाद गलद्बाष्प-बिंदुर्बद्धशिरोंजलिः ॥ १४ ॥ देशत्यागतपःक्लेश-कांतारक्रमणक्लमः ॥ आर्यपु-
त्र मया तुभ्य-मुपनिन्ये पदे पदे ॥ १५ ॥ उत्तमर्णोऽथ नाभूस्त्व-मधमर्णास्म्यहं पुनः ॥ त-
त्किं ब्रवीमि सर्वं मे । क्षंतव्यं विप्रियं त्वया ॥ १६ ॥

इति विज्ञप्य सा पत्युः । पादौ केशैरमार्जयत् ॥ विनयः कुलनारीणां । कांते नैसर्गि-
को यतः ॥ १६ ॥ युगंधरसुतोऽप्यूचे । नत्वा तौ दंपतीप्रति ॥ युवां दुःखे मया क्लिष्टौ ।
पंचालोच्छेदमिच्छुना ॥ १७ ॥ तद्युवामपराधं मे । सर्वं मर्षितुमर्हथः ॥ नैव कुप्यंति विद्वांसो
। वैद्याय कटुदायिने ॥ १८ ॥ दंपती बहुमेनाते । तत्तदा मंत्रिणो वचः ॥ मंतुं नांतर्गतं ध-

ने । कृतज्ञो हितकारिणां ॥ २० ॥ ऊचे चंपकमालाथ । पद्मावत्या सविस्मयं ॥ सखि प्रि-
यसखी त्यक्ता । या पूर्वं ब्राह्मणी मया ॥ २१ ॥ साऽभूद्दासवदत्तैव । दृश्यतामंग कौतुकं ॥
वर्षीयान् स च विप्रोऽपि । जातो यौगंधरायणः ॥२२॥ तामित्युक्त्वा पुरो गत्वा । नत्वा प्रद्योतनंदि-
नीं ॥ अवोचदार्ये याऽवज्ञा । चक्रे सा मयि मृष्यतां ॥ २३ ॥ ततः प्रद्योतजा प्राह । स्नेहा
त्पद्मावतीं सखि ॥ सेवास्मि मास्मभूः खिन्ना । नाऽवज्ञातास्मि च त्वया ॥ २४ ॥ जामा-
तुश्च सुतायाश्च । प्रवृत्तिं ज्ञातवानथ ॥ संभ्रांतमानसस्तत्र । महावाहुरुपाययौ ॥ २५ ॥ पि-
तुः पद्मावती तत्र । वृत्तमाख्यात्तदा ततं ॥ अशंसत नमस्यंतीं । प्रीत्या प्रद्योतजां पुरः ॥
॥ २६ ॥ तात प्रणौति विनया--ज्ज्यायसी ते तनूरुहा ॥ दृष्टैव जीवयामास । यासौ जा-
मातर तव ॥ २७ ॥ युग्मं ॥ चिरकालमवैधव्यं । वत्से धत्तेति चेदिपः ॥ तामभ्यनंददाशी-
र्भि--र्मालवेश्वरसंभवां ॥ २८ ॥ अत्रांतरे गिरौ तत्र । बृंहितैरथ हेषितैः ॥ निःस्वाननिःस्वनै-
श्चापि । शब्दाऽद्वैतमजायत ॥ २९ ॥

अथ वत्सेश्वरस्तार । तं निशम्य सविस्मयः ॥ धीरां व्यापारयामास । दृशं शब्दानु-

ततोऽनेकाननेकपान् ॥ ऐक्षिष्ट स परोलक्षा—स्तुंगां-
सारिणीं ॥ ३० ॥ नगस्योपत्तिकोपांते । भटकोटिमयीं महीं ॥ वेगादेत्य पुमानेकः
श्चैव तुरंगमान् ॥ ३१ ॥ विस्मयात्पश्यतस्तस्य । रुमण्वानयमित्यमुं ॥ आलिंग्यागमने हे-
। पादयोरपतत्तदा ॥ ३२ ॥ तमुत्थाप्य विदित्वाथ । देवस्याह्वानहेतवे ॥ आयातोऽस्मि नि-
तुं । पप्रच्छ पृथिवीपतिः ॥ ३३ ॥ रुमण्वानप्यभाषिष्ट । द्रुतं पादावधार्यतां ॥ लाञ्छवि-
षेवंतां । चिराद्दत्सा महोत्सवं ॥ ३४ ॥ अद्य प्रसीद तद्देव । प्रणिपत्याथ गोमुखं
न्यस्तहस्ता हि । मार्गमालोकते प्रजा ॥ ३५ ॥ ततो नाभेयमभ्यर्च्य । विसृज्य वि-
॥ सपत्नीको महानीकः । कौशांबीमचलन्नृपः ॥ ३६ ॥ सहायांतं महाबाहुं
नयात्ततः ॥ वत्सान् वत्सेश्वरः प्राप्य । पितेवानंदमासदत् ॥ ३७ ॥
कालिंदीकूलदेशेषु । पंचालोच्छेदसाक्षिषु ॥ सेनां निवेशयामास । द्रुतमेत्य क्षितीश्वरः ॥
॥ ३८ ॥ रुमण्वानभ्यधाद्देवं । पंचालस्याजिभूरियं ॥ अत्र गोपालपालाभ्यां । पंचालंप्रति युत्कृतं
॥ ३९ ॥ भीमार्जुनाभ्यां कोपेन । कौरवान्प्रति यत्पुरा ॥ सुदर्शनकुमारोऽत्र । तथा ते प-
रिपंथिनः ॥ ४० ॥ दर्शमास शौंडीर्यं । यशःपांशुरितांबरं ॥ विहितोच्चरणारंभो । यथा क-

करिणि केसरी ॥ ४१ ॥ अत्र तु प्रौढमित्रेण । सचिवाग्रेसरेण ते ॥ अछेदि कदलीछेदं । पं-
चालनृपतेः शिरः ॥ ४२ ॥ इत्थ कथयतस्तस्य । रजःसंचयसूचिताः ॥ प्रत्याजग्मुस्तमुर्वीशं
। राजपुत्रास्त्रयोऽपि ते ॥ ४३ ॥ तानौचित्येन संमान्य । नृपः शिबिरमेत्य च ॥ उपवाह्यां
समारुह्य । दिव्या प्रत्यचलत्पुरीं ॥ ४४ ॥ सौधमारुह्य पश्यंत्य–स्तं प्रवेशं महीपतेः ॥ च-
रितार्थानि चक्रूपि । चक्षुः पुरपुरध्रयः ॥ ४५ ॥ विन्यस्तस्वस्तिकश्रेणिं । वैजयंतीतरंगितां ॥
उत्तोरणां पुरीं पश्यन् । मुमुदे मेदिनीपतिः ॥ ४६ ॥ अन्तितो विपणिश्रेणि–मधिरूढास्तमा-
दरात् ॥ अवाकिरन् प्रजा लाजान्–राजमार्गमुपागतं ॥ ४७ ॥ सोऽमोदत न वारस्त्री–चलितै-
श्चामरैस्तथा ॥ यथा पौरवधूधूतो–त्तरीयसिचयांचलैः ॥ ४८ ॥ मुक्तमुक्तामयोच्चूल–चंद्रोद-
यकृतोदयं ॥ उन्मीलन्मंगलोद्गारं । सौधमध्यासदन्नृपः ॥ ४९ ॥ गजैः केऽपि हयैः केऽपि ।
रत्नैः केऽपि महीभुजः ॥ तदात्तभूरिसंभारैः । प्राभृतैरुपतस्थिरे ॥ ५० ॥ गोपालपालौ नृपा-
लः । कुमारं च सुदर्शन ॥ स सत्कृत्य यथौचित्यं । विससर्ज सगौरवं ॥ ५१ ॥
निरस्य व्यसनं सर्व । सर्वसद्दतया तया ॥ स प्रजाः पालयामास । पुरा दाशरथिर्य-

श्र ॥ ५२ ॥ निःसीमैः प्रेमसंस्कारै-स्तिरस्कारः पुरातनः ॥ तेन वासवदत्तायाः । समूलमु-
दमूल्यत ॥ ५३ ॥ पद्मावत्यामपि प्रेम । तस्य पल्लवितं तथा ॥ अमन्यत तपःक्लेशं । सा
कृतार्थं यथात्मनः ॥ ५४ ॥ सर्वाधिकारिणं चक्रे । राजा यौगंधरायणं ॥ सर्वमेधाशुचिं वा-
च-स्पतिं वास्तोष्पतिर्यथा ॥ ५५ ॥ तस्यारितिमिरस्तोमं । तेजःप्रत्यूहकारणं ॥ तरणेररुणे-
नेव । व्यलीयत रुमण्वता ॥ ५६ ॥ विविधोपासनाचारु-गुणाकृष्टहृदं तदा ॥ आत्मांतेवासिनं
चक्रे । वीशामीशो वसंतकं ॥ ५७ ॥ धर्ममाड्यिमाणस्य । दीनानुद्धरतोऽपि च ॥ नित्यं त-
स्य मनो मातृ-वंदनायोदकंठत ॥ ५८ ॥ तस्याकूतमथो ज्ञात्वा । ज्ञानेन ज्ञातनंदनः ॥ पा-
वयामास कौशांबीं । निजैश्चरणरेणुभिः ॥ ५९ ॥ मृगावत्यपि तत्रागा-त्समं चंदनबालया ॥
वांछितार्थः समस्तोऽपि । सुकृतैरुपढौक्यते ॥ ६० ॥ व्याख्यापर्षज्जिनेशस्य । प्राकारत्रयशा-
लिनी ॥ सुरैः परिसराराम । रमणीया विनिर्ममे ॥ ६१ ॥ तद्विदित्वा तदा क्षोणी-पालनोद्या-
नपालकात् ॥ सांतःपुरपरीवारो-ऽगागमि स्वामिनोंतिके ॥ ६२ ॥ तत्र प्रदक्षिणीकृत्य । जग-
वंतं भुवः प्रभुः ॥ जानुस्पृष्टमहीपृष्टः । सानंदमिति तुष्टुवे ॥ ६३ ॥ जय त्वं सर्वसिद्धार्थ-

सिद्धार्थनृपनंदनः ॥ जगत्संकल्पकल्पद्रो । गुणमाणिक्यरोहण ॥ ६४ ॥ इत्थं कृतस्तुतिर्निर्य-दानंदाश्रुकणावलिः ॥ ननाम नम्रपंचांगः । कौशांबीशो जिनेश्वरं ॥ ६५ ॥ ततः समुचितं देश-मध्यासीने महीपतौ ॥ वर्द्धमानजिनाधीशः । शुद्धं धर्ममुपादिशत् ॥ ६६ ॥ संसारसा-गरस्यांतः । प्राणिभिर्भवधारिभिः ॥ रत्नत्रयमुपादेयं । हेयास्तु विषयोपलाः ॥ ६७ ॥ सुखं विषयसेवाया-मत्यल्पं सर्षपादपि ॥ दुःखं तु देहिनः प्राज्यं । मधुबिंद्वादिपुंगवत् ॥ ६८ ॥

तथाहि पुरुषः कोऽपि । देशाद्देशं परिभ्रमन् ॥ सार्थेनाऽविशदटवीं । चौरयादोमहानदीं ॥ ६९ ॥ तं सार्थं लुंटितुं तत्र । चौरव्याघ्रा दधाविरे ॥ मृगवच्चापलायंत । सर्वे सार्थनिवासिनः ॥ ७० ॥ सार्थाद्धीनः स तु पुमान् । प्रविवेश महाटवीं ॥ आकंठमागतैः प्राणै-रधावत्कूपवारिवत् ॥ ७१ ॥ उच्चैस्तरो गिरिरिव । मकरन्मदनिर्झरः ॥ उदस्तहस्तोऽत्राणीव । मत्रंशयितुमंबरात् ॥ ७२ ॥ कंपयन् क्ष्मामंह्रिपातै-रंतःसुषिरिणीमिव ॥ आध्माततामतास्यो । घनश्यामोग्रदेहभृत् ॥ ७३ ॥ साक्षाद्यम इव क्रोधा-द्दुर्द्धरो वनकुंजरः ॥ वराकं कांदिशीकं तं । पुरुषं प्रत्यधावत ॥ ७४ ॥ त्रिभिर्विशेषकं ॥ मारयिष्याम्यहं याहि-याहीति प्रेरयन्निव ॥ ज-

घान तं मुहुः पृष्टे । वारणः स्वकरेण च ॥ ७५ ॥ स पुमान् कंदुक इव । निपतन्नुत्पतन्
नयात् ॥ धावमानः क्रमेणाप । तृणच्छन्नमथावटं ॥ ७६ ॥ गजोऽवश्यं जीवितहृत् । कूपे
जीवामि जातुचित् ॥ इति सोऽदात्तत्र झंपां । जीविताशा हि दुस्त्यजा ॥ ७७ ॥ वटोऽवट-
तटे चाऽभू–त्तत्पादश्चैक आयतः ॥ लंबमानोऽभवत्कूप–मध्ये भुजगभोगवत् ॥ ७८ ॥
स पुमान्निपतन् कूपे । प्राप तत्पादमंतरा ॥ आलंब्य लंबमानोऽस्था–द्रज्जुवद्घटीनि-
भः ॥ ७९ ॥ करं प्रक्षिप्य कूपांतः । करी पस्पर्श तच्छिरः ॥ नाऽशकत्तु तमादातुं । मंदभाग्य
इवौषधीः ॥ ८० ॥ दत्तदृष्टिरधोभागे । भागधेयविवर्जितः ॥ कूपस्यांतरजगरं । गरीयांसं दद-
र्श सः ॥ ८१ ॥ पतत्कवलबुद्ध्या तं । निरीक्ष्याऽजगरोऽपि सः ॥ कूपांतरपरं कूप–मिव व-
क्त्रं व्यकाशयत् ॥ ८२ ॥ चत्वारः फणिनस्तत्र । तं दष्टुं दुष्टचेतसः ॥ फूत्कारपवनन्यासै–
रतुदन् धमनीनिभैः ॥ ८३ ॥ वटप्ररोहं तं छेत्तुं । मूषकौ द्वौ सितासितौ ॥ चटच्चटिति च-
क्राते । दंतक्रकचगोचरं ॥ ८४ ॥ अनाप्नुवन् पुमांसं तं । सोऽपि मत्तो मतंगजः ॥ जघान
वटशाखां तां । वटमुत्पाटयन्निव ॥ ८५ ॥ वटस्यांदोल्यमानेन । पादेन स पुमान् दृढं ॥ पा-

एवंविध तन्वानो । नियुद्धमिव निर्ममे ॥ ७६ ॥ गजेनाऽऽहन्यमानायाः । शाखाया मधुम-
क्षिकाः ॥ मधुमंडपमुत्सृज्यो-ड्डिडिरे तोमराननाः ॥ ७७ ॥ मक्षिकास्ता ददंशुस्तं । लोह-
संदंशसन्निभैः ॥ तुंडैर्भयंकरैस्तीक्ष्णै-र्जीवाकृष्टिपरैरिव ॥ ७८ ॥ तत्पक्कमक्षिकारुद्ध-सर्वांगः
स पुमांस्तदा ॥ कृतपक्ष इवाऽलक्षि । कूपान्निर्गंतुमुत्सुकः ॥ ७९ ॥ वटस्थमधुकोशाच्च । म-
धुबिंदुर्मुहुर्मुहुः ॥ ललाटे न्यपतत्तस्य । वार्दलाद्वारिबिंदुवत् ॥ ८० ॥ मधुबिंदुस्तस्य भाला-
द्विलुठित्वा प्राविशन्मुखे ॥ स तदा स्वादमासाद्य । सुखं महदमन्यत ॥ ८१ ॥

श्रूयतां नृपतेऽमुष्य । दृष्टांतस्य प्रभावना ॥ यः पुमान् स हि संसारी । याऽटवी सा
तु संसृतिः ॥ ८२ ॥ यो गजः स पुनर्मृत्यु-र्यः कूपो मर्त्यजन्म तत् ॥ योऽजगरः स नर-
को । येऽहयस्ते क्रुधादयः ॥ ८३ ॥ वटपादो यस्तदायु-र्मूषकौ च सिताऽसितौ ॥ तौ शुक्ल-
कृष्णौ द्वौ पक्षा-वायुश्छेदपरायणौ ॥ ८४ ॥ या मक्षिका व्याधयस्ते । मधुबिंदुस्तु यो मु-
खे ॥ तद्धि सुखं वैषयिकं । तत्र रज्येत कः सुधीः ॥ ८५ ॥ चतुर्भिः कलापकं ॥ देवो वि-
द्याधरो नापि । यदि कूपात्समुद्धरेत् ॥ तत्किमिच्छेदथवा न । स पुमान् दैवदूषितः ॥ ८६ ॥

एवं दुःखमयं तुच्छं । मत्वा वैषयिकं सुखं ॥ सुधीर्धर्माय जागर्या–दद्वैतसुखदायिने ॥ ९७ ॥
देवः सम्यग् जिनो यत्र । गुरुर्यत्र चरित्रवान् ॥ यत्र जीवादयस्तत्त्वं । तत्र धर्मे मतिं कुरु॥
॥ ९८ ॥ तस्य चेतसि जैनेंद्र–वचःस्वात्यंबुसेकतः ॥ शुक्तौ मुक्ताफलेनेव । धर्मेण पदमाद-
धे ॥ ९९ ॥ श्राद्धधर्ममुपादित्सु–र्वत्सराजो जिनेश्वरं ॥ मातुः समक्षमुच्छ्राय । नम्रमौलिर्व्य-
जिज्ञपत् ॥ १०० ॥ प्रपद्ये प्रोषिताऽवद्यं । श्रावकत्वं त्वदंतिके ॥ त्रिभुवःस्वस्त्रयीरक्षा–त्वक्षक-
क्ष प्रसीद मे ॥ १ ॥

इति विज्ञापितो यामे । चरमे चरमो जिनः ॥ श्रावकत्वं नरेंद्राय । तस्मै दातुं प्रचक्रमे
॥ २ ॥ मौलं विमानमारुह्य । सूर्यचंद्रमसौ स्वयं ॥ तदा च त्रिजगन्नाथ–मुपासितुमुपेयतुः ॥
॥ ३ ॥ सूर्येंदुकांतवपुषोः । श्रीपुषोस्तद्विमानयोः ॥ ज्योतिरुज्जागरं दध्रे । जगदीशयशःश्रि-
यः ॥ ४ ॥ तदुद्योतस्तमःस्तोमं । निजग्राह बहिस्तनं ॥ प्रभुस्त्वंतर्गतं श्रेया–नद्रो लोकस्त-
दातनः ॥ ५ ॥ अथ चित्ते मृगावत्याः । प्रादुर्भूतमिदं तदा ॥ वत्सराजं महाराजं । मन्ये ध-
न्यशिरोमणिं ॥ ६ ॥ तिमिरोच्छेदनिस्तंद्रौ । चंद्रमःकर्मसाक्षिणौ ॥ साक्षिणौ च व्रतादाने ।

दित्वरमसौ धर्मं
वत्सेशस्य वन्नूरतुः ॥ ७ ॥ तज्जातेन निमित्तेन । श्लाध्येनानेन निश्चितं ॥ नदित्वरमसौ धर्मं
। नूपालः पालयिष्यति ॥ ८ ॥ अथ त्रैलोक्यनाथेन । श्राद्धधर्माधिरोपणात् ॥ शिरसि न्य-
स्तहस्तेन । वत्सराजोऽनुगृह्यत ॥९॥ त्रिदशानामधीशेन । शशिना तपनेन च ॥ साधु सा-
धर्मिकत्वेन । स तदा प्रत्यपद्यत ॥ १० ॥ तदा चंदनबालाथ । विज्ञाय समयं स्वयं ॥ जिन-
नाथमनुज्ञाप्य । स्वीयाश्रयमशिश्रयत् ॥११॥ दृष्टालोकेन लोकेन । दोषायां दिनमानिना ॥ आनं-
दनिःस्यंदयुषा । तथैवाऽवस्थितं पुनः ॥ १२ ॥ मृगावत्यपि हर्षेण । पारवश्यमुपेयुषी ॥ सं-
ध्यां स्वयं नाज्ञासी–न्न चाऽज्ञाप्यत केनचित् ॥ १३ ॥ नगवंतमन्निष्टुत्य । तथा स्वमन्नि-
रुह्य च ॥ विमानं युलतापुष्प । पुष्पदंतौ स्म गच्छतः ॥ १४ ॥
तयोः स्वस्थानगमना–दंधकारो निरर्गलः ॥ प्रससार जलाधारः । पालिव्यपगमादिव ॥
॥ १५ ॥ निर्नामनष्टमाशान्नि–स्तमो राज्ये विजृम्निते ॥ निम्नानामुन्नतानां च । विन्नागो न
व्यन्नाव्यत ॥ १६ ॥ ध्वांतैकछत्रमालोक्य । क्षोन्नाद्दध्यौ मृगावती ॥ कस्मादकस्मादेवेय—
मन्नूदूरितमा तमी ॥ १७ ॥ संभ्रांतमानसा याव–दन्वियेष प्रवर्त्तिनीं ॥ प्रदेशे यत्र तत्रासी–

दीक्ष्यतेस्म न सा क्वचित् ॥ १८ ॥ लब्धोन्मादः प्रमादो मे । यत्संध्यासमयो मया ॥ चंद्रसू-
र्यविमानांशु–प्रज्ञावान्न विज्ञावितः ॥ १९ ॥ ततोऽन्वशोचदात्मानं । नितरां सा विषादिनी ॥
निजापराधे साधूनां । चेतो दंदह्यतेऽधिकं ॥ २० ॥ मया नाऽज्ञायि गच्छंती । प्रवर्त्तिन्यपि शू-
न्यया ॥ कथं संप्रति गंतास्मि । ध्वांतेऽस्मिंस्तत्पदांतिकं ॥ २१ ॥ ईर्यापथः कथं चाय–मिद्धे
तमसि शुद्ध्यतु ॥ एवमेकपदे प्राप्तां । धिग्ममैतां प्रमादितां ॥ २२ ॥ इति स्वमनुशोचंती ।
सिंचंती मार्गमश्रुभिः ॥ पदे पदे स्खलंती च । सा चचालाश्रयंप्रति ॥ २३ ॥ आगाच्च प्र-
तिनीव्रात–स्वाध्यायध्वनिबंधुरं ॥ गतातिचारचारित्र–पात्रसंश्रयमाश्रयं ॥ २४ ॥ आवश्यकां-
ते विश्रांतां । संस्तारांकतले तदा ॥ मृगावती शनैरेत्य । तत्राऽवंदत चंदनां ॥ २५ ॥ विन-
येन नमस्यंती–मवगम्य मृगावतीं ॥ उपालब्ध वचोभिस्तां । चंदना चंदनोपमैः ॥ २६ ॥
नक्तमेकाकिनी वत्से । जिनास्थाने स्थितासि किं ॥ निशामप्यसमप्रज्ञे । न हि ज्ञातवती कथं
॥२७॥ इतरापि तमस्विन्यां । संचरंती कुलांगना॥ अन्यथा शंक्यते लोकैः । किं पुनर्न तपो-
धना ॥ २८ ॥ चेटकस्य विशां पत्यु–रङ्गजस्त्वं तनूरुहा ॥ शतानीकमहीभर्त्तु–रनूश्च सद्-

चारिणी ॥ २९ ॥ प्रज्ञावतीप्रभृतय—स्तव याश्च सहोदराः॥ तासां कष्टयाणि नाम्नापि । जनोऽयं विरजीनवेत् ॥ ३० ॥ आयुष्मति प्रमादोऽयं । तत्ते नाऽनूत्कुलोचितः ॥ उपात्तमुनिवृत्ताना—मसौ हि परमो रिपुः ॥ ३१ ॥ पश्य प्रत्यर्थिनाऽनेन । हन्यते संयमः सता ॥ हते तस्मिन् हतास्तेऽपि । मुधा तेषां हि जीवितं ॥ ३२ ॥ अचक्षुर्विषयेऽमुष्मिन् । पथि संचरणेन ते ॥ षट्कायोच्छेदनाद्धत्से । हतं संयमजीवित ॥ ३३ ॥ इत्युपालज्यमानाया—श्चंदनाया मृगावती ॥ निमीलन्नयनद्वंद्व-निद्रा मानसमानशे ॥ ३४ ॥ तूष्णीयुपि प्रवर्त्तिन्या—मंहिसवाहनक्रियां ॥ कुर्वती सर्वतः साऽश्रु—पूरिताक्षीत्यचिंतयत् ॥ ३५ ॥ आर्यिकाजनमर्यादा—विपर्यासविधायिनीं ॥ धिग्मां गुरुजनोद्वेग—निर्माणकलुषीकृतां ॥ ३६ ॥ संयमैकसमीचीन । सर्वोऽपि श्रमणीजनः ॥ सोऽतिप्रशस्यो यत्रास्ति । नातिचारः क्वचिद्व्रते ॥ ३७ ॥ अतद्धर्मनिर्माण—क्षपिताखिलकष्मषाः॥ धन्याः प्राचीनमुनयो । मुक्तिमार्गमुपस्थिताः ॥३८॥

एवमध्यवसायेन । कुंदेंदुकुमुदत्विषा ॥ सा हत्वा घातिकर्माणि । कलयामास केवलं ॥ ॥ ३९ ॥ ततः सा हस्तविन्यस्त—व्यक्तमुक्ताकणोपम ॥ जगदप्यखिलं चक्रे । द्रव्यपर्यायत्रे-

॥ संचरिष्णुस्तदा तेन । दुष्टो दृष्टो
दंतः ॥ ४० ॥ तिमिरं मेदुरीकुर्व-न्नंतःश्यामतया तया ॥ न्यस्तः संस्तारके बाहुः ।
फणी ततः ॥ ४१ ॥ मृगावत्या तमालोक्य । निष्कंटाटनलंपटं ॥ मनसा च प्रस-
प्रवर्त्तिन्याः क्षितेस्तलात् ॥ ४२ ॥ तस्यास्तेन जजागार । प्रयत्नेन प्रवर्त्तिनी ॥ धिग्मदी-
न्नेन । निजगाद मृगावतीं ॥ ४३ ॥ वत्सेऽद्यापि तथैवासि । मम संवाहनापरा ॥ मम बाहुर्महीतलात्
योऽपराधोऽयं । यद्विसृष्टासि नो मया ॥ ४४ ॥ कथमुत्सारितो वत्से । भीमोऽन्येति भुजं-
तया पर्यनुयुक्तेति । शंसतिस्म मृगावती ॥ ४५ ॥ अयं च तूर्णमन्ययर्णौ । कुत्रार्यामिति पृच्छंतीं ।
गमः ॥ माऽसौ दशत्विति न्यस्तो । हस्तः संस्तारके मया ॥ ४६ ॥
पुनरूचे मृगावती ॥ अहिः सन्निहितो याति । ज्वतीनामयं पुरः ॥ ४७ ॥
इत्याख्यातेऽपि सा प्राह । नाहं पश्यामि किंचन ॥ त्वमीक्षसे किं नेत्राभ्यां । किं वा
ज्ञानेन केनचित् ॥ ४८ ॥ इति पृष्टा प्रवर्त्तिन्या । सा ज्ञानेनेत्यवोचत ॥ किमुत प्रतिपातेन
। किमुताऽप्रतिपातिना ॥ ४९ ॥ इति प्रश्नपरां पूज्यां । व्याजहार मृगावती ॥ इमं ज्ञानेन
पश्यामि । सर्पमप्रतिपातिना ॥ ५० ॥ इत्थं चंदनबालापि । श्रुत्वा विस्मितमानसा ॥ अचिं-

॥ १७० ॥

तयच्चिरं चित्ते । अहो धन्या मृगावती ॥ ५१ ॥ या प्रपंचेन पंचापि । विषयान् भुक्तपूर्विणी ॥ पश्चादात्तव्रताऽप्यासीत् । सर्वेषामग्रतः सरी ॥ ५२ ॥ धन्याहमपि यस्या मे । गुरुः सिद्धार्थनंदनः ॥ स्पृहणीयगुणग्रामा । शिष्या चेयं मृगावती ॥ ५३ ॥ इडमुद्भाष्णुसंवेगा—द्गुराण्यखिलान्यपि ॥ कृत्वा घातीनि कर्माणि । प्रपेदे सापि केवलं ॥ ५४ ॥ गुरुन्यो लभ्यतेऽवश्य । पदमुत्तरमुत्तर ॥ मृगावत्या त्वनीयत । गुरवोऽपि परं पदं ॥ ५५ ॥ शाखाः प्रेखंति मूलेभ्यः । क्रमोऽयं सर्वशाखिनां ॥ मूलोदयस्तु शाखाभ्यो । येषामल्पा हि तेंह्रिपाः ॥ ॥ ५६ ॥ विजहार महीहार—भूतः स्थानांतरे प्रभुः ॥ चंदनापि मृगावत्या । समं स्वामिनमन्वगात् ॥ ५७ ॥ दिवि दिविषदां वर्गे । जग्मुषि प्रीतमानसे ॥ वत्सराजोऽपि कौशांबीं । सपत्नीकः समाययौ ॥ ५८ ॥ प्रीत्याथ पालयामास । प्रजामिव निजां प्रजां ॥ स विजिग्येऽरिषड्वर्गं । न्यायमार्गममार्गयत् ॥ ५९ ॥ स त्रिष्वपि पुमार्थेषु । समतां दर्शयन्नपि ॥ मानसेनाऽनुरागेण । धर्ममेव न्यषेवत ॥ ६० ॥ जीवंतस्वामिनो बिंब—सनाथं पृथिवीपतिः ॥ प्रासादं कारयामास । स्वर्णरत्नमयं पुरि ॥ ६१ ॥ सोऽमारिं घोषयामास । रथयात्रामवीवृ-

तत् ॥ अवीवृधच्च दानेन । दीनाऽनाथमनोरथान् ॥ ६२ ॥
तत् ॥ अवीवृधच्च दानेन । दीनाऽनाथमनोरथान् ॥ ६२ ॥ कर्म निर्मूल्य निर्वाणं । लेभेऽनंतसुखोदयं ॥
अथ केवलिपर्याय–मनुभूय मृगावती ॥ कर्म निर्मूल्य निर्वाणं । लेभेऽनंतसुखोदयं ॥ द्वयं दधानेदमशेषयो-
॥ ६३ ॥ शीलं शरच्चंद्रमरीचिनिर्मलं । गुरौ च गुर्वी बहुमानसंपदा ॥ द्वयं दधानेदमशेषयो-
षितां । निदर्शनीभावमगान्मृगावती ॥ ६४ ॥ मृगावत्याः सत्याश्चरितमिदमुद्दाममहिम–प्र-
रोहं संरोहत्पुलकमुकुले कर्णकुहरे ॥ समानीतं नीतिं जनयति कुमारीं शमयति । श्रियः
सूते स्फीताः परमपि पदं तत्प्रथयति ॥ ६५ ॥ बुधभ्रमरचुंबितं सकलमागमारामतो । वि-
चित्य कुसुमोज्ज्वलं सरसमर्थजातं मया ॥ इदं किल मृगावतीचरितपुष्पदामाहृतं । दिशा-
त्किमपि सौरभं सुचिरमस्तु कंठे सतां ॥ ६६ ॥ इति मलधारिश्रीदेवप्रभसूरिविरचिते श्री-
मृगावतीचरित्रे धर्मसारचूडामणौ पंचमो विश्रामः समाप्तः ॥ आ श्रीमृगावतीचरित्र जामन-
गरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे छापी प्रसिद्ध कर्युं छे.
॥ समाप्तोऽयं ग्रंथः गुरुश्रीमच्चारित्रविजयसुप्रसादात ॥

